॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीताः

# श्री सर्वमूलग्रन्थाः

## द्वितीयो भागः



सम्पादकः

पण्डित गंगूर मध्वाचार्यः

प्रकाशकाः

परमपूज्य श्रीप्रज्ञाननिधितीर्थश्रीपादाः

अध्यक्षाः, श्रीमदानन्दतीर्थ सत्तीर्थोन्नाहिनी सभा, मुळबागिलु

॥ श्री बादरायणो विजयते तराम् ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीताः

# श्रीसर्वमूलग्रन्थाः

## द्वितीयो भागः

सम्पादकः
पं. गंगूर मध्वाचार्यः

प्रकाशकाः
परमपूज्य श्रीप्रज्ञाननिधितीर्थश्रीपादाः
अध्यक्षाः, श्रीमदानन्दतीर्थ सत्तीर्थोन्नाहिनी सभा
श्रीप्रसन्नराघवेन्द्रस्वामिमठः
मुळबागिलु (कोलार जिल्ला)

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीता:

# श्रीसर्वमूलग्रन्था:

## द्वितीयो भाग:

( श्री श्रीप्रज्ञाननिधितीर्थश्रीपादाना चतुर्थाश्रमस्वीकारदशवार्षिकमहोत्सवे प्रकाशितोऽयं ग्रन्थ )

प्रथममुद्रणम् १९९८, प्रतय: १०००



सम्पादक

पं. मध्वाचार्य रामाचार्य गंगूर

B E(Elect) M E(Aero)

प्रकाशका

परमपूज्य श्रीप्रज्ञाननिधितीर्थश्रीपादा:

अध्यक्षा:, श्रीमदानन्दतीर्थ सत्तीर्थोन्नाहिनी सभा

श्रीप्रसन्नराघवेन्द्रस्वामिमठ , मुळबागिलु - ५६७८०१

व्यवस्थापक:

डि. एन्. वासुदेव:

अक्षरविन्यासयोजना

पं. मध्वाचार्य गंगूर B E(Elect) M E(Aero)

श्री डि. एन्. वासुदेव

**Shri Badarayano Vijayate Taram**

# SHRI SARVAMŪLAGRANTHĀH

## COMPLETE WORKS OF
## SHRI ĀNANDATEERTHA BHAGAVATPĀDĀCHĀRYA

## VOLUME - II

*Editor*

Pandıt Madhwacharya Ramacharya Gangur
B E(Elect) M E(Aero)

*Publisher*

Shri Prajnananidhi Teertha Swamiji
President, AnandaTeertha Satteertha Unnahını Sabha
Prasanna Raghavendra Swamı Mutt
MULABAGILU (Koalr Dıstrıct)

# SHRI SARVAMŪLAGRANTHĀH

Complete Works of

Shri AnandaTeertha Bhagavatpadacharya [Shri Madhvacharya]

## VOLUME-II

**First Edition : 1998 1000 Copies**



*Editor*

Pandit Madhwacharya Ramacharya Gangur

B E(Elect) M E(Aero)

*Publisher*

Shri Prajnananidhi Teertha Swamiji

President, Shree AnandaTeertha Satteertha Unnahini Sabha

Mulabagilu-563131(Karnataka State)

*DTP Design & Layout*

Pandit Madhwacharya Gangur, BE(Elect) M E(Aero)

D.N.Vasudeva

*Copies available at*

D N.Vasudeva

358, 2nd A Main, 5th Cross

Shreenivasa Nagar,

BANGALORE-560050

Phone . 6697128

H.S.Krishna

No 75/1, 4th Main Road

Narasimha Raja Colony

BANGALORE - 560019

## ।। श्रीसर्वमूलग्रन्था:।।
### द्वितीयो भागः



**

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु
श्रीसर्वमूलग्रन्थेषु

# ।। द्वितीयो भागः ।।

॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# षट्प्रश्नोपनिषद्भाष्यम्

॥ ॐ ॥ नमो भगवते तस्मै प्राणादिप्रभविष्णवे ।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे ॥

'प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः। स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम् । सूर्याचन्द्रमसौ देवः ससर्ज पुरुषोत्तमः । तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः । अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती । आदित्यस्थः स वायुस्तु प्राणानात्मनि संनयेत् । प्राच्याः प्राणास्तथेन्द्राद्या

---

॥ षट्प्रश्नोपनिषत् ॥

॥ हरिः ॐ॥ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वैतत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥ तान्ह स ऋषिरुवाच ॥ भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान्पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥ अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन्कुतो ह वा इमाः प्रजाः प्रजायन्त इति ॥ ३ ॥ तस्मै स होवाच । प्रजाकामो ह वै प्रजापतिः । स तपोऽतप्यत । स मिथुनमुत्पादयते । रयिञ्च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥ आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः । रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥ ५ ॥ अथादित्य उदयन्यत्प्राचीं

दक्षिणाश्च यमादयः । प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः । शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ । सभार्याः कोणपैः सार्धं चात्वारो दिशि दिश्यपि । संवत्सरस्थो भगवान्वागीरावयनस्थितौ । मासस्थितः स भगवान्पक्षयोर्वाक्च मारुतः । अहोरात्रे तु भगवान्प्राणो ह्यहनि वाङ् निशि । दम्पत्योर्भगवान्विष्णुर्भार्यास्था तु सरस्वती । भर्तृस्थः स स्वयं वायुरेवं जानन्विमुच्यते' इति प्रजापतिसंहितायाम् ॥१॥ **(प्रश्न० १)**

---

दिश प्रविशति तेन प्राच्यान्प्राणान्रश्मिषु सन्निधत्ते॥ ६ ॥ यद्दक्षिणां यत्प्रतिचीं यदुदीचीयदधो यदूर्ध्वं यदन्तरादिशो यत्संर्व प्रकाशयति तेन सर्वान्प्राणान्रश्मिषु सन्निधत्ते। स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्युक्तम् ॥ ७ ॥ विश्वरूपं करिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ ८ ॥ संवत्सरो वै प्रजापतिः तस्यायने दक्षिणं चोत्तरं च तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते। ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ॥९॥ अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतद् अमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः । तदेष श्लोकः॥ १० ॥ पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षळर आहुरर्पितमिति ॥ ११ ॥ मासो वै प्रजापतिः। तस्य कृष्णपक्ष एव रयिः। शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्ति । इतर इतरस्मिन्॥ १२ ॥ अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते ॥ १३ ॥ ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते । अन्नं वै प्रजापतिस्ततो ह वैतद्रेतः । तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥ तद्ये ह वैतत्प्रजापतिव्रतं चरन्ति । ते मिथुनमुत्पादयन्ते तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥ १५ ॥ तेषामसौ विरजो ब्रह्मलोके न येषु जिह्ममनृतं न माया चेति॥ १६ ॥ १॥ **प्रथमः प्रश्नः ॥**

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन्कत्येष देवाः प्रजा विधारयन्ते । कतर एतत्प्रकाशयन्ते। कः पुनरेषां वरिष्ठ इति ॥१॥ तस्मै स होवाच । आकाशो ह वा एष

वायुरग्निरित्यत्र भूतवायुरुच्यते । प्राणशब्देन प्रधानवायुः ॥२॥ (प्रश्न० २)

आत्मतः परमात्मतः । 'विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः । प्राणाद्यास्तान्नयन्प्राण आज्ञापयति राजवत् । स्वयं च पञ्चरूपस्सन् दद्यात्

---

देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुःश्रोत्रं च ते प्राकाश्या अभिवदन्ति । वयमेतद्बाणमवष्टभ्यं विधारयाम इति ॥ २ ॥ तान्वरिष्ठः प्राण उवाच । मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः ॥३॥ सोऽभिमानाद् ऊर्ध्वमुत्क्रमतइव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते । तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते । तद्यथा मधुमक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते । एवं वाङ्मनश्चक्षुः श्रोत्रं चेति ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥ एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥ अरा इव रथनाभौ प्राणे सर्व प्रतिष्ठितम् । ऋचो यजूंषि सामानि यज्ञः क्षत्रं च ब्रह्म च ॥ ६ ॥ प्रजापतिश्चरसि गर्भे त्वमेव प्रति जायसे । तुभ्यं प्राण प्रजास्त्विमा यत्प्राणैः प्रतितिष्ठसि ॥ ७ ॥ देवानामसि वह्नितमः पितृणां प्रथमा स्वधा । ऋषीणां चरितं सत्यमथर्वाङ्गिरसामपि ॥ ८ ॥ इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता । त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥ यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः । आनन्दा रूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥ व्रात्यस्त्वं प्राणैकऋषिरत्तविश्वस्य सत्पतिः । वयमद्यस्य दातारः पिता त्वं मातरिश्व नः ॥ ११ ॥ याते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥ प्राणस्यैतद्वशे सर्व त्रिदिवे यत्प्रतिष्ठितम् । मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ १३ ॥ २ ॥ **द्वितीय प्रश्नः ॥**

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन्कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रतिष्ठते । केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥१॥ तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्रह्मिष्ठोऽसीति। तस्मात्तेऽहं ब्रवीमि ॥२॥ आत्मत एष प्राणो जायते । यथैषा पुरुषे च्छाया

मोक्षादिकं प्रभुः' इति प्रभञ्जने ॥३॥ (प्रश्न० ३)

'रश्मीनामविशेषेऽपि ह्यन्यदृष्टिव्यपेक्षया । सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात् । एवं विष्णोस्तु सामीप्याद्देवानां सुप्तिगस्य तु । व्यवहाराकरत्वाच्च एकीभाव इतीर्यते' इति च । भगवतः शरीरवत्सादृश्ययुक्ते जीवे सुखं भवति।

---

एतस्मिन्नेतदाततम् । मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥ यथा सम्राडेवाधिकृतान्विनियुङ्क्ते एतान्ग्रामानधितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते ॥ ४ ॥ पायूपस्थेऽपानं चक्षुःश्रोत्रेमुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते । मध्ये तु समानः । एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥ हृदि ह्येष आत्मा । अत्रैतदेव शतं नाडीनाम् । तासां शतमेकैकस्यां द्वासप्ततिं प्रतिशाखा नाडीसहस्राण्यासु व्यानश्चरति ॥ ६ ॥ अथैकयोर्ध्वमुदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥ आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥ तेजो ह वा उदानः तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति । प्राणस्तेजसा युक्तः सहात्मना यथासङ्कल्पितं लोकं नयति ॥ १० ॥ य एवं विद्वान्प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति । तदेष श्लोकः ॥ ११ ॥ उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥ १२ ॥ ३ ॥ **तृतीय प्रश्नः ॥**

अथ हैनं सोर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिन्जाग्रति । कतर एष देवः स्वप्नान्पश्यति । कस्यैतत्सुखं भवति कस्मिन्सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥ तस्मै स होवाच । यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति ताः पुनरुदयतः प्रचरन्त्येवं ह वैतत्सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न श्रृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥ प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो

कस्यैतत्सुखं भवतीति पृष्टत्वात् । न ह्यचेतनस्य शरीरस्य सुखं भवति । 'यस्यात्मा शरीरम्' इति च श्रुतिः । 'सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुखं भवेत् । सुप्तौ तस्य सुखार्थं हि भगवान्सुप्तिमानयेत्' इति च ॥४॥ (प्रश्न० ४)

---

यद्गार्हपत्यात्प्रणीयते । प्रणयनादाहवनीयः प्राणः ॥ ३ ॥ यदुच्छ्वासनिःश्वासावेतावाहुती समं नयति स समानो मनो ह वाव यजमान इष्टं फलमेवोदानः । स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥ अत्रैष देवः स्वप्ने महिमानमनुभवति यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुश्रृणोति देश दिगन्तरे च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति । दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥ स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यति ॥ अथ यदेतस्मिञ्छरीरे सुखभवति ॥ ६ ॥ स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते । एवं ह वैतत्सर्व परे आत्मनि सम्प्रतिष्ठन्ते ॥ ७ ॥ पृथवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्चवायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसनं च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ च दातव्यं च पादौ च गन्तव्यं च पायुश्च विसर्जयितव्यं चोपस्थश्चानन्दयितव्यं च मनश्च मन्तव्यं च पायुश्च विसर्जयितव्यं चोपस्थश्चानन्दयितव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षर आत्मनि सम्प्रतिष्ठते ॥९॥ परमेवाक्षरं प्रतिपद्यते स यो ह वैतदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्व भवति । तदेष श्लोकः ॥ १० ॥ विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । तदेतदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥ ४ ॥ **चतुर्थः प्रश्नः ॥**

अथ हैनं शैब्दः सत्यकामः पप्रच्छ । स यो हवैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति ॥१॥ तस्मै स होवाच। एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः । तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति ॥२॥

'प्रणवेन हरिं ध्यायन्ब्रह्मलोकं समेत्य च । ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशयः' ॥ ५ ॥ **(प्रश्न० ५)**

'कर्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी । लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता । तपोभिमानी वह्निश्च वरुणो वीर्यदेवता । अन्नस्य देवता सोमो मनो नामानिरुद्धकः । इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः । रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेन देवताः । श्रद्धेति वायोः पत्नी स्यात्सर्वेषां प्रभवाप्यया । तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः । तस्यापीशः कारणं च वासुदेवः परोऽव्ययः । न तस्य सदृशः कश्चित्कुत एवोत्तमो भवेत् । तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं परात्परम्' इति तत्त्वविवेके । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति मन्त्रोक्त एव कम्रः । न हीन्द्रियेभ्यो मनः पश्चात् । 'तत्प्राक्श्रुतेश्च' इति भगवद्वचनम् । 'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः ।

---

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते । स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनु भवति ॥३॥ अथ यदि द्विमात्रेण मनसि सम्पद्यते सोन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥४॥ यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्माज्जीवघनात्परात्परपुरिशयं पुरुषमीक्षते । तदेतौ श्लोकाभवतः ॥५॥ तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥६॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते । तमोङ्कारेणैवायनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परचेति ॥ ७ ॥ ५ ॥ **पञ्चमः प्रश्नः ॥**

अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तं मह्यं ब्रवीहीति । तमहं

चासां नामरूपे इत्युक्तत्वात् । अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता । ततश्च वरुणः सृष्टस्तस्मादग्निस्ततोऽवरः । आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत् । तस्मादग्निः पावकाख्यः प्रथमोऽग्नेस्तुतस्ततः । ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता । उदकात्मको बुधस्तस्या उषा नामात्मिका ततः । ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः । क्रमात्प्रत्यवरा एते मुक्ताः सर्वगुणैरपि । नित्यमुक्तस्ततो विष्णुः प्राणादप्युत्तमोत्तमः' इति च । समुद्रे इत्येवं प्रोच्यते । पुरुषे इत्येवं प्रोच्यते । भिद्येते तासां नामरूपे । भिद्यते विष्णौ स्थितानां मुक्तानां च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः । न च भेदशब्दो नाशे प्रयुज्यमानः क्वापि दृष्टः । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते । नाशस्त्वर्थत एवावगम्यते । न चात्रार्थतोऽपि

---

कुमारमब्रुवं नाहमिमं वेद यद्यहमिममवेदिष्यं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज ।तं त्वापृच्छामिक्वासौ पुरुष इति ॥१॥ तस्मै स होवाच । इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २॥ स ईक्षाञ्चक्रे कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति ॥ ३ ॥ स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च ॥ ४ ॥ यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते । स एषोऽकलोऽमृतो भवति । तदेष श्लोकः ॥ ५ ॥ अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥ तान्होवाच ।एतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति ॥ ७ ॥ ते हि तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ८ ॥ ६ ॥ **षष्टः प्रश्नः ॥**

**॥ इति षट्प्रश्नोपनिषत् समाप्ता ॥**

नाशोऽवगम्यते । नहि नामानि रूपाणि च कपालवद्बहुधा भूतानि तिष्ठन्ति । अतो भिद्येते इति पृथक्कमेवोच्यते । 'अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिता' इति वाक्यशेषाच्च । अतः पुरुषे भिन्नानि नामरूपाणि प्रतिष्ठितानीत्येवार्थः । अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेव । 'प्राणादयः कला यस्मिन्मुक्ता नित्यं प्रतिष्ठिताः । पृथक् पृथङ्नामरूपैर्नमस्तस्मै पराय ते' इति सत्तत्त्वे । नामरूपाद्विमुक्त इत्यनेनापि नामरूपामुक्तत्वमुच्यते । विप्रिय इत्यादिवत् । नामरूपे अविहायेति च पूर्वत्र । अनन्तं वै नामानन्ता विश्वेदेवा इति नामरूपयोरनन्तत्वं हि श्रुतिर्वक्ति । 'यत्र पूर्वे साध्याः सन्ति देवाः' । 'स तत्र पर्येति जक्षन् क्रीडन्रममाणः । सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता' ॥ 'ऋचां त्वः पोषमास्ते पुपुष्वान्गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च । अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम् ॥ (प्रश्न० ६)

नमोनमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय मे ।
परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥ ६ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**श्रीषट्प्रश्नोपनिषद्भाष्यं सम्पूर्णम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**

***

॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# ईशावास्योपनिषद्भाष्यम्

॥ॐ॥ नित्यानित्यजगद्धात्रे नित्याय ज्ञानमूर्तये ।
पूर्णानन्दाय हरये सर्वयज्ञभुजे नमः ॥१॥
यस्माद्ब्रह्मेन्द्ररुद्रादिदेवतानां श्रियोऽपि च ।
ज्ञानस्फूर्तिस्सदा तस्मै हरये गुरवे नमः ॥२॥

स्वायम्भुवो मनुरेतैर्मन्त्रैर्भगवन्तमाकूतिसूनुं यज्ञनामानं विष्णुं तुष्टाव । 'स्वायम्भुवस्स्वदौहित्रं विष्णुं यज्ञाभिधं मनुः । ईशावास्यादिभिर्मन्त्रैस्तुष्टावाऽवहितात्मना । रक्षोभिरुग्रैस्सम्प्राप्तः खादितुं मोचितस्तदा । स्तोत्रं श्रुत्वैव यज्ञेन तान्हत्वाऽवध्यतां गतान् । प्रादाद्धि भगवांस्तेषामवध्यत्वं हरः प्रभुः। तैर्वध्यत्वं तथान्येषामितः कोऽन्यो हरेः प्रभुः' इति ब्रह्माण्डे । भागवते चायमेवार्थ उक्तः । ईशस्यावासयोग्यमीशावास्यम् । जगत्यां प्रकृतौ । तेनेशेन त्यक्तेन दत्तेन भुञ्जीथाः ॥ 'स्वतः प्रवृत्त्यशक्तत्वादीशावास्यमिदं जगत् । प्रवृत्तये प्रकृतिगं यस्मात्स प्रकृतीश्वरः । तदधीनप्रवृत्तित्वात्तदीयं सर्वमेव तत् । तद्दत्तेनैव भुञ्जीथा अतो नान्यं प्रयाचयेत्' इति ब्रह्माण्डे ॥१॥

---

**॥ ईशावास्योपनिषत् ॥**

॥ हरिः ॐ ॥ ईशावास्यमिदँ सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः । एवं त्वयि

अकुर्वतः कर्म न लिप्यत इति नास्ति । 'अज्ञस्य कर्म लिप्येत कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम् । अतोऽलेपेऽपि लेपस्स्यादतः कार्यैव सा सदा' इति नारदीये ॥२॥ सुष्टु रमणविरुद्धत्वादसुराणां प्राप्यत्वाच्चासुर्याः । 'न च रमन्त्यहो असदुपासनयाऽऽत्महनः' इत्युक्तत्वात् । 'महादुःखैकहेतुत्वात् प्राप्यत्वादसुरैस्तथा । असुर्या नाम ते लोकास्तान्यान्ति विमुखा हरौ' इति च वामने । ये के चेति नियम उक्तः । 'नियमेन तमो यान्ति सर्वेऽपि विमुखा हरौ' इति च ॥३॥ 'अनेजन्निर्भयत्वात्तदेकं प्राधान्यतस्तथा । सम्यग्ज्ञातु-मशक्यत्वादगम्यं तत्सुरैरपि । स्वयं तु सर्वानगमत्पूर्वमेव स्वभावतः । अचिन्त्यशक्तितश्चैव सर्वगत्वाच्च तत्परम् । द्रवतोऽत्येति संतिष्ठत्तस्मिन् कर्माण्यधान्मरुत् । मारुत्येव यतश्श्रेष्ठा सर्वा तां हरयेऽर्पयेदि'ति ब्रह्माण्डे । ऋष ज्ञाने ॥४॥ तदेजति तत एव एजत्यन्यत् । तत्स्वयं नैजति । 'ततो बिभेति सर्वोऽपि न बिभेति हरिः स्वयम् । सर्वगत्वात्स दूरे च बाह्येऽतश्च समीपगः' इति तत्त्वसंहितायाम् ॥५॥ 'सर्वगं परमात्मानं सर्वं च परमात्मनि। यः पशयेत्स भयाभावान्नात्मानं गोप्तुमिच्छति' इति सौकरायणश्रुतिः ॥६॥ यस्मिन्परमात्मनि सर्वभूतानि स परमात्मैव तत्र सर्वभूतेष्वभूत् । एवं सर्वभूतेष्वेकत्वेन परमात्मानं विजानतः को मोहः । 'यस्मिन्सर्वाणि भूतानि स आत्मा सर्वभूतगः । एवं सर्वत्र यो विष्णुं पश्येत्तस्य विजानतः । को मोहः कोऽथवा शोकः स विष्णुं पर्यगाद्यतः' इति पिप्पलादशाखायाम् ।

---

नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥ असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥ अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥ तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः ॥ ५ ॥ यस्तु सर्वाणि भूतान्यात्मन्येवानु पश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥ यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कश्शोक एकत्वमनु

पूर्वेक्तानुवादेन शोकमोहाभावोऽपि विजानतश्चात्रोच्यते । अभ्यासश्च सर्वगतत्वस्य तात्पर्यद्योतनार्थः ॥७॥ 'शुक्रं तच्छोकराहित्यादव्रणं नित्यपूर्णतः । पावनत्वात्सदा शुद्धमकायं लिंगवर्जनात् । स्थूलदेहस्य राहित्यादस्नाविर मुदाहृतम् । एवं भूतोऽपि सार्वज्ञात्कविरित्येव शब्द्यते । ब्रह्मादिसर्वमनसां प्रकृतेर्मनसोऽपि च । ईशितृत्वान्मनीषी स परिभूः सर्वतो वरः । सदाऽनन्याश्रयत्वाच्च स्वयम्भूः परिकीर्तितः । स सत्यं जगदेतादृङ्नित्यमेव प्रवाहतः । अनाद्यनन्तकालेषु प्रवाहैकप्रकारतः । नियमेनैव ससृजे भगवान्पुरुषोत्तमः । सज्ज्ञानानन्दशीर्षोऽसौ सज्ज्ञानानन्दबाहुकः । सज्ज्ञानानन्ददेहश्च सज्ज्ञानानन्दपादवान् । एवं भूतोमहाविष्णुर्यथार्थं जगदीदृशम् । अनाद्यनन्तकालीनं ससर्जात्मेच्छया प्रभुः' इति वाराहे ॥८॥ 'अन्यथोपासका ये तु तमोऽन्धं यान्त्यसंशयम् । ततोऽधिकमिव व्यक्तं यान्ति तेषामनिन्दकाः । तस्माद्यथास्वरूपं तु नारायणमनामयम् । अयथार्थस्य निन्दां च (९॥१०) ये विदुस्सह सज्जनाः । ते निन्दयाऽयथार्थस्य दुःखाज्ञानादिरूपिणः । दुःखाज्ञानादिसन्तीर्णाः सुखज्ञानादिरूपिणः । यथार्थस्य परिज्ञानात्सुखज्ञानादिरूपताम् । या(११)न्त्येवं सृष्टिकर्तृत्वं नाङ्गीकुर्वन्तिये हरेः । तेऽपि यान्ति तमो घोरं तथा संहारकर्तृताम् । नाङ्गीकुर्वन्ति तेऽप्येवं तस्मात्सर्वगुणात्मकम् । सर्वकर्तारमीशेशं सर्वसंहारकारणम् ॥ १२ ॥१३॥

---

पश्यतः ॥७॥ सपर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् । कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्स माभ्यः ॥ ८॥ अन्धंतमः प्रविशंति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाँ रताः ॥९ ॥ अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥ विद्यां चाविद्यां च यस्तद्वेदोभयँ सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥ अन्धंतम प्रविशन्ति येऽसम्भूतिमुपासते । ततो भूय इव ते तमो य उ संभूत्याँ रताः ॥ १२ ॥ अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥ सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह । विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते

यो वेद संहृतिज्ञानात् देहबन्धाद्विमुच्यते । सुखज्ञानादिकर्तृत्वज्ञानात्तव्द्यक्तिमाव्रजेत् । सर्वदोषविनिर्मुक्तं गुणरूपं जनार्दनम् । जानीयान्न गुणानां च भागहानिं प्रकल्पयेत् । न मुक्तानामपि हरेस्साम्यं विष्णोरभिन्नताम्। नैव प्रचिन्तयेत्तस्माद्ब्रह्मादेस्साम्यमेव वा । मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम्। ततो विष्णोः परोत्कर्षं सम्यग्ज्ञात्वा विमुच्यते' इति कौर्मे ॥१४॥ 'पात्रं हिरण्मयं सूर्यमण्डलं समुदाहृतम् । विष्णोस्सत्यस्य तेनैव सर्वदाऽपिहितं मुखम् । तत्तु पूर्णत्वतः पूषा विष्णुर्दर्शयति स्वयम् । सत्यधर्माय भक्ताय (१५) प्रधानज्ञानरूपतः । विष्णुरेकऋषिर्ज्ञेयो यमो नियमनाद्धरिः । सूर्यस्स सूरिगम्यत्वात्प्राजापत्यः प्रजापतेः । विशेषेणैव गम्यत्वा(१६)दहं चासावहेयतः । अस्मि नित्यास्तितामानात्सर्वजीवेषु संस्थितः । स्वयं तु सर्वजीवेभ्यो व्यतिरिक्तः परो हरिः । स क्रतुर्ज्ञानरूपत्वादग्निरङ्गप्रणेतृतः' इति ब्रह्माण्डे । सत्यं ब्रह्म हृदये धारयतीति सत्यधर्मा । एकोऽसौशब्दः प्राणे स्थित इति ॥१७॥ यस्मिन्नयं स्थितः सोऽप्यमृतः किमु परः । अः ब्रह्मैव निलयनं यस्य वायोः सोऽनिलम् । 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः । मुख्यामृतः स्वयं रामः परमात्मा सनातनः' इति रामसंहितायाम् ॥ १८ ॥ भक्तानां स्मरणं विष्णोः

---

॥ १४ ॥ हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नापावृणु सत्यधर्माय दृष्टये ॥ १५ ॥ पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह तेजो यत्ते रूपं कल्याणतमतत्ते पश्यामि ॥ १६ ॥ योऽसावसौ पुरुषस्सोऽहमस्मि ॥ १७ ॥ वायुरनिलममृतमथेदं भस्मान्तँ शरीरं ॥ १८ ॥ ॐ क्रतो स्मर कृतँ स्मर ॥ ॐ क्रतो स्मर कृतँस्मर ॥ १९ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देववयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ २० ॥

**॥ ईशावास्योपनिषत् समाप्ता ॥**

नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्त्कचिदिष्यते' इति ब्रह्मतर्के ॥१९॥ वयुनं ज्ञानम् । 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' इति वचनात्। जुहुराणं अस्मान् अल्पीकुर्वत् । युयोधि वियोजय। 'यदस्मान्कुरुते-ऽत्यल्पांस्तदेनोऽस्मद्वियोजय । नय नो मोक्षवित्तायेत्यस्तौद्यज्ञमनुस्स्वराट्' इति स्कान्दे । युयु वियोग इति धातुः । भक्तिज्ञानाभ्यां भूयिष्ठां नमउक्तिं विधेम ॥२०॥

पूर्णशक्तिचिदानन्द श्रीतेजःस्पष्टमूर्तये ।
ममाभ्यधिकमित्राय नमो नारायणाय ते ॥१॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**ईशावास्योपनिषद्भाष्यं समाप्तम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**
*******

॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# आथर्वणोपनिषद्भाष्यम्

॥ ॐ ॥ आनन्दमजरं नित्यमजमक्षयमच्युतम् ।
अनन्तशक्तिं सर्वज्ञं नमस्ये पुरुषोत्तमम् ॥

'मनोर्वैवस्वतस्यादावथर्वा ब्रह्मणोऽजनि । मित्रश्च वरुणश्चाथो प्रहेतिर्हेतिरेव च । ब्रह्मणः प्रथमे कल्पे शिवः प्रथमजः स्मृतः । सनकाद्यास्तु वाराहे ब्रह्मा विष्णोः सुतोऽग्रजः' इति ब्रह्माण्डे ।

'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः । ता एव परमा विद्या यदा विष्णोस्तु वाचकाः' इति परमसंहितायाम् । 'ऋग्भिर्हौत्रेण शम्सन्ति तथौद्गात्रैस्तुवन्ति ये। विष्णुमेव तथा तस्मै यजुर्भिरपि जुह्वति ॥ स्तुवन्त्याथर्वणैश्चैनं सेतिहासपुराणकैः । न विष्णोः सदृशं किञ्चित्परमं चापि मन्वते । सर्वोत्तमं तं जानन्तस्ते हि भागवतोत्तमाः ॥ वेदे रामायणे चैव पुराणे भारते तथा ।

---

॥ आथर्वणोपनिषत् ॥

॥ हरिः ॐ ॥ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥ अथर्वणे यां प्रवदेत ब्रह्मा अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥ शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥ तस्मै स होवाच ॥ द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति । परा चैवापरा च ॥ ४ ॥

आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ एतदन्ते च मध्ये च ब्रह्मैवोक्त्वा विजानताम् । ऋगादिपञ्चधासंस्थं शब्दब्रह्म प्रशाम्यति । यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । स्तुवन्ति सत्यकर्माणं सत्यं सत्येषु सामसु'। 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये' । 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाहम्' इति च भारते । 'चतुर्दश महाविद्यास्थानानि वेदितव्यानि भवन्ति' इति च मूलश्रुतिः ।

'पञ्चरात्रमृगाद्याश्च सर्वमेकं पुराऽभवत् । मूलवेद इति ह्याख्या काले कृतयुगे तदा । नैवर्क्सामादिनामानि तदा वेदस्य चाभवन् । नैव चेन्द्रादिनामानि विष्णोरन्यत्र कुत्रचित् । ब्रह्मरुद्रेन्द्रपूर्वैस्तु नामभिः प्रोच्यते हरिः । देवतात्वेन चेज्यस्स ब्रह्माद्या मनुनामकाः । वक्तृत्वेन पितृत्वेन कारित्वेनैव चादरात् । इज्यन्ते देवताः सर्वा न तु देवतया क्वचित् । अनन्ययाजिनस्ते तु तस्मात्कार्तयुगा जनाः । प्राप्नुवन्ति हरिं तं च तस्माद्वेदे न किञ्चन । पारावर्यं हरेर्यस्मादुत्थितास्तुरगाननात् । ऋगाद्या अनुव्याख्यान्तास्तस्मात्सर्वैर्हरिं यजेत् । तस्माद्ब्रह्मादयः सर्वे मनवो मानवास्तथा । यजन्ति सर्ववेदैस्तं जानन्ति च विनिश्चयात् । अशक्तः पञ्चरात्रेण ऋगाद्यैर्वाथ तं यजेत् । ऋगाद्यैरेव स त्रैतैर्भिन्नैरिष्टो जनैर्हरिः । द्वापरीयैर्जनैर्विष्णुः पञ्चरात्रैस्तु केवलैः । कलौ तु नाममात्रेण पूज्यते भगवान्हरिः । एको वेदः कृते ह्यासीत्त्रेतायां स त्रिधाऽभवत् । स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् । उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः । मुख्यो धर्मः कार्तयुगो वर्तितव्यः कलावपि । त्रेतादौ तदशक्त्या हि धर्मोऽन्यः सम्प्रकीर्तितः । कृते भागवताः सर्वे वेदाश्च पुरुषास्तथा ।

---

तत्रापरा । ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति ॥ अथ परा । यया तदक्षरमधिगम्यते ॥५॥ यत्तदद्रेश्यं अग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् ।

त्रेतायां भिन्नविषयास्ततस्त्रैविद्यतां गताः। तस्मादेकः सर्ववेदैर्ज्ञेयो विष्णुः सनातनः । पूज्यो यज्ञैः सोपचारैर्ध्येयो वन्द्यश्च सर्वदा' इत्यादि नारायणसंहितायाम् ।

'वेदवादाश्चानुयुगं ह्रसन्तीति च नः श्रुतिः' इति भारते । 'वेदैश्च पञ्चरात्रैश्च भक्त्या यज्ञैस्तथैव च । दृश्योऽहं नान्यथा दृश्यो वर्षकोटिशतैरपि' इत्यादि वाराहे । अत्रापि तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन्नित्यादिना कर्मविषयामपरविद्यामुक्त्वा 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यारभ्याथर्वणानेव मन्त्रान्परविद्यात्वेनाह । चतुर्वेदसंस्कारवतामेव च विद्यायामधिकार उक्तः । 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति ॥ शिरोव्रतमित्युपलक्षणत्वेन । 'स्ववेदव्रतयुक्तस्य सर्ववेदगतास्वपि । अधिकारोऽस्ति विद्यासु नावेदव्रतिनः क्वचित्' इति व्यासस्मृतौ । एतद् ब्रह्म चतुर्मुखः ॥ **(१)**॥

तदेतत्सत्यं भगवान् । तत्कामाः कर्माण्याचरथ। तदा सापि परविद्या। अन्यथा प्लवा ह्येते अदृढा यज्ञरूपाः । भगवद्विषयत्वेन कृते एष वः पुण्यः सुकृतो ब्रह्मलोकः। परब्रह्मलोकः। 'निष्कामं ज्ञानपूर्वं यन्निवृत्तमिह चोच्यते ।

---

तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥६॥ यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ॥ यथा सतः पुरुषात्केशलोमानितथाऽक्षरात्सम्भवतीह विश्वम् ॥७॥ तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥८॥ यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते॥ ९॥ **खण्ड १ ॥ अध्याय १** ॥ (१) ॥

तदेतत्सत्यम् । मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि॥ तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥ यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २ ॥

निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम्' इति व्यासस्मृतौ । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत' इति च श्रुतिः । 'सहयज्ञाः प्रजाः सृष्ट्वा' इत्युक्त्वा 'एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः । अघायुरिन्द्रियारामो मोघं पार्थ स जीवति' इति च । 'यान्ति मद्याजिनोऽपि माम्' इति च। 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते' इति च । यस्त्वात्मरतिरित्युक्त्वापि कुर्याद्विद्वांस्तथासक्त इत्येवोक्तत्वाच्च । 'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः' इति च । 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ' इत्युक्तत्वाच्च नात्राश्रमान्तरविरोधः । त्रेतायां बहुधा सन्ततानि कृते त्वेकप्रकारेणैव सन्ततानि । 'अग्निष्टोमादिभिर्यज्ञैः सर्वदेवस्थितं हरिम् । यजन्ति तांश्च कारित्वाद्वसुस्तस्मात्तथायजत् । पृथक्पृथक्च त्रेतायां यजन्ते देवतागणान् । यथा कृते तथा प्राज्ञास्त्रेतायां बहुधा ततः' इति पाद्मे । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः'। 'यो देवानां देवतमो जनित्रो वायोस्तस्मै सोममेभ्यो जुहोमि । एवं वायोः पितरं विष्णुमेव यजन्ति देवैः सह ये कृते जनाः । एवं त्रेतायां केचिदन्ये पृथक्तानिष्ट्वा विष्णावर्पयन्ते न चान्य' इति च ब्रह्माण्डे ।

विष्णोः सर्वेभ्यः किञ्चिदुत्तमत्वं जानन्त इमं लोकमाविशन्ति । साम्यं हीनत्वं वा जानन्तो हीनतरं तम एव विशन्ति । 'देवेभ्य उत्तमं विष्णुं

---

यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदैवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥ ३ ॥ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥ एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥५ ॥ एह्येहीति तामाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योमऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥६॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म।

राजवद्यस्तं मन्यते । याजीस मानुषं याति साम्यहीनत्वविक्तम' इति च । त्रैविद्या मामिति तु 'येप्यन्यदेवता भक्ताः । तेऽपि मामेव कौन्तेय यजन्ति'। 'अहं हि सर्वयज्ञानां भोक्ता' इत्युक्तत्वादज्ञानपूर्वयाजिनस्त्रैविद्याः ॥(२)॥

'अपरं त्वक्षरंया सा प्रकृतिर्जडरूपिका । अक्षरं परमं श्रीस्तु परतः परमक्षरम् । वासुदेवः परानन्द इति त्रिविधमक्षरम्' इति च । 'विष्णवङ्गानां हि नामानि द्युवादीनि तु सर्वशः । क्रीडादिशक्तिरूपत्वात्तज्जत्वादन्यवस्तुषु' इति च । 'वासुदेवः पुमान्नामा पूर्णत्वात्स स्वयोषिति । रमायां गर्भमदधात्

---

एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यान्ति ॥ ७॥ अविद्यायामन्तरे वेष्टयमानाः स्वयं धीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥ अविद्यायां बहुधा वर्तमानाः स्वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥ इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति ॥ १० ॥ तपःश्रद्धे येऽभ्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥ परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥१२ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम् ॥ १३ ॥ **खण्ड २ ॥ अध्याय १ ॥ (२) ॥**

तदेतत्सत्यम् । यथा सुदीप्तात्पावकाद्विष्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥ दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥ एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥ अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुःप्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥ तस्मादग्निः

प्रजास्तस्माप्प्रजज्ञिरे' इति च। सप्तार्चिषो वृत्तयः । होमाः सम्बन्धाः। लोका गोलकाः । गुहाशयां बुद्धौ । 'लोपः समान' इति सूत्रादेकयकारलोपः प्रतिपुरुषं सप्त सप्त । भगवतः कर्म चेष्टा तपो ज्ञानं च ॥(३)॥

परामृतब्रह्माख्यः पुरुषो भगवानेव । 'यैषा चेष्टा भगवतो यच्च ज्ञानं परात्मनः । तत्सर्वं भगवानेव ये च धर्मा बलादय' इति च। 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतिः । विज्ञानाद्ब्रह्मणः परम् । 'नाभिह्रदादिह सतोऽम्भसि यस्य पुंसो विज्ञानशक्तिरहमासमनन्तशक्तेः' इति भागवते । 'प्राणः प्रणयनाद्विष्णुर्वक्तृत्वाद्वागुदीरितः । मनो मन्तृत्वतो विष्णुः सर्वजीवनियामकः'

---

समिद्धो यश्च सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम्। पुमान्रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ॥ ५ ॥ तस्मादृचः साम यजूंषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः॥ ६॥ तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयांसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥ सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तहोमाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयानिहिताः सप्त सप्त ॥ ८ ॥ अतः समुद्रा गिरयश्च सर्वे अस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥ **खण्ड ३ ॥ अध्याय १ ॥ (३) ॥**

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरति ह सोम्य ॥ १ ॥ आविः सन्निहितं गुहाचरं नाम महत्पदम्। अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्च यत् । एतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ २ ॥ यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यम् । तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ ३ ॥ धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥४॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।

इति शब्दनिर्णये । अमृतस्य मुक्तस्य सेतुः ॥ 'ॐ मुक्तोपसृप्यव्यपदेशात् ॐ' ॥ 'मुक्तानां परमागतिः' इत्यादेः । 'हृदयस्थः सदा विष्णुर्बहुधा चैकधा भवन्। चरति स्वेच्छयैवान्तः सर्वजीवान्नियामयन्' इति प्रवृत्ते । 'परा अप्यवरा यस्मात्स हि विष्णुः परावरः । ब्रह्माण्डमध्यगो नित्यं तपत्येष रवौ स्थितः' इति च । सूर्यादयस्तं न भासयन्ति । इदं ब्रह्मैव विश्वं पूर्णम् । इदमेव वरिष्ठं सर्वोत्तमम् । इदंशब्दानां बहुत्वाद्ब्रह्मविषय एवेदंशब्दः **॥(४)॥**

स्वादुवत्सर्वदाऽत्ति । न तु स्वाद्वेव । 'तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद' इत्यज्ञानां स्वादुनिषेधात् । जीवाद्यमेव नाश्नाति भगवान्न तु

---

अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ५ ॥ यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ६ ॥ अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ७ ॥ यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा सम्प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ॥ तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ८ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ९ ॥ हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ १० ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ११ ॥ ब्रह्मैवेदममृतं पुरस्तात्पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ १२ ॥ **खण्ड १ ॥ अध्याय २ ॥ (४) ॥**

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यश्नन्नन्यो अभिचाकशीति ॥ १ ॥ समाने वृक्षे पुरुषो निमग्नो अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥ यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय

नाश्नात्येव । तस्येदाहुः पिप्पलं स्वाद्वित्युक्तत्वात् । 'स्वातन्त्र्येणैव भोक्तृत्वाद्दुःखाभोगाच्च सर्वदा । अभोक्ता चैव भोक्ता च भगवान्विष्णुरव्ययः' इति च तत्त्वसारे । 'नास्तीशोऽस्या यतोऽन्यो हि ततोऽनीशा हरेर्मतिः। तया मुह्यति जीवस्तमन्यं ज्ञात्वा विमुच्यते । जीवादन्यः स्वतन्त्रोऽयं यतोऽतः पुरुषोत्तमः' इति ब्रह्मसारे । पुण्यं चानिष्टं विधूय । 'सत्यो हि भगवान्विष्णुः सद्गुणत्वात्प्रकीर्तितः । असुरास्तद्विरुद्धत्वादनृताः परिकीर्तिताः। तस्य विष्णोर्निधानं तु वैकुण्ठो लोक उत्तमः' इति च । सर्वगत्वात्तद्दूरेऽन्तिके च । 'नान्यैर्देवैर्हरिं पश्येज्ज्ञानरूपेण वायुना । ब्रह्मणा परमज्ञानरूपेण हरिणा तथा । प्रसन्नेनैव तं पश्येदन्येऽनुज्ञाप्रदायिनः' इति च । षोडशकलाशरीरो न भवतीति निष्कलः । 'यदा पश्यः पश्यते रुग्मवर्णम्' । 'आनन्दरूपममृतं यद्विभाति' इत्युक्तत्वात् **॥ (५) ॥**

---

निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥ प्राणो ह्येष सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठाः ॥ ४ ॥ सत्येन लभ्यस्तपसाह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥ सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥ बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥ एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश । प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥९॥ यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥ **खण्ड १ ॥ अध्याय ३** ॥(५)॥

स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥ कामान्यः कामयते मन्यमानः स

स आत्मज्ञार्चको ब्रह्मणो धाम प्राणं वेद । यत्र विश्वं पूर्णं ब्रह्म निहितम् । 'प्रधानं धाम विष्णोस्तु प्राण एव प्रकीर्तितः । उपायैर्यो विजानीयात्प्राणस्थं परमेश्वरम् । तस्य प्राणे हरिर्नित्यमाविष्टो भवति ध्रुवम्। नित्यं प्राणे स्थितस्यैव विष्णोरावेश एव हि । प्राणद्वारेण यज्ज्ञानदीपनं ज्ञानिनः सदा । सन्निधानं यथा प्राप्ताः पिशाचाः पुरुषेष्वपि । तत्र स्थित्वापि भुञ्जन्त आविशेयुः पुनश्च ते । मन्त्रादिभिस्तथा विष्णुः सदा प्राणस्थितोऽपि सन् । ज्ञानदीप्त्यादिकं कुर्याज्ज्ञानिनः पुनरेव तु' इति च । एतच्छुक्रं प्रत्यन्यदतिवर्तन्ते । 'सर्वं तीर्त्वा हरिं शुक्रं प्रतिवर्ती भवेत्पुनः। ज्ञानिनः सा हि मुक्तिः स्यात्तन्नैवात्येति कश्चन' इति महावाराहे । सर्वतो देहादेर्मुक्ताः सर्वगं भगवन्तं प्राप्य तमेवापियन्ति । 'देहादेः सर्वतो मुक्ताः सर्वगं पुरुषोत्तमम् । प्राप्य तस्मिन्प्रविश्याथ मोदन्तेऽन्तर्बहिस्तथा' इति च ।

ब्रह्मलोकेषु स्थित्वा परान्तकाले परिमुच्यन्ति । 'अविरोधश्च सादृश्यमेकदेशस्थितिस्तथा । एकीभावस्त्रिधा प्रोक्तो नैकीभावः स्वरूपयोः । कुतोऽभूतस्य भवनं स्वरूपस्यैक्यमेव हि । अतो नदीनां जीवानां विरुद्धानां नृणामपि । अब्धिना हरिणा चैव तथैव च नरान्तरैः । एकीभावस्तु संश्लेषो विरोधस्य च वर्जनम् । स्वरूपैक्यं कुतस्तेषां नित्यभिन्नस्वरूपिणाम् ।

---

कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः ॥२ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥ नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥ सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा मुक्तात्मानः सर्वमेवापियंति ॥ ५॥ वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोकेषु परान्तकाले परामृताः त्परिमुच्यन्ति सर्वे ॥ ६ ॥ गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रति देवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७॥ यथा नद्यः स्यन्दमानाः

हरेरपि स्वरूपाणामेकीभावो यदोच्यते । संश्लेष एव सिद्धत्वात्स्वरूपैक्यस्य नो भव' इति च । गताः मुक्ताः । प्राणादिपञ्चदशकलारूपा देवता । अन्ये च देवाः सर्वे प्रतिदेवतासु देवताप्रतिबिन्बभूतासु प्रजासु प्रति प्रतिस्थिताः कर्माणि विज्ञानमयो जीवश्च परमात्मनि प्रविशन्ति ।

'प्रतिबिम्बो हरेः प्राणस्तस्य चान्याः कलाः क्रमात् । कलानां देवता अन्या देवतानां नरा अपि । तस्मात्सर्वेषु मुक्तेषु नरेष्वपि नियामकाः । तिष्ठन्ति नात्र सन्देहः परमात्मनि चाखिलाः' इति मुक्तिविवेके। 'कलाभ्यश्चान्यदेवेभ्यः कर्म प्रत्यवरं यतः । कलाभ्यः पृथगुक्तं तत्पुष्करः कर्म चोच्यते' इति । अन्यथा गता भविष्यन्तीत्यध्याहारो दोषः । न च मूलरूपाणि प्रतिदेवता इत्युच्यन्ते देवानाम् । प्रतिरूपशब्दवद्धि प्रतिदेवताशब्दः । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र । इमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति यथा सोम्येमाः समुद्रायणाः' इति नदीदृष्टान्तपूर्वकं पुरुषप्राप्तिकथनाच्च मुक्ता देवता एवोच्यन्ते । 'स प्राणमसृजत' इत्यादेश्च पुरुषो भगवान् । 'अगम्यनामरूपत्वादमुक्तैर्मुक्तिगा नराः। विहीननामरूपास्तु न हि तद्रहितत्वतः। अशरीरो यथा वायुः सामान्यागम्यदेहतः । एवं नद्यः समुद्रस्थाः सामान्यागम्यरूपतः' इति च । 'स्वकीयमुदकं नद्यः समुद्रे नैव जानते । वायुस्तु तत्पृथक्ज्ञात्वा मेघे कृत्वा प्रवर्षति' इति च । विमुक्त इत्यमुक्त इत्यर्थः, विप्रिय इतिवत् । अविहायेति च । अनन्तं वै नामेति च श्रुतेः ।

'परंब्रह्म विदित्वा तु बृंहितः स्यात्स्वयोग्यतः । नायोग्यं किञ्चिदाप्नोति कुत एव हरेर्गुणान्' इति च । 'ब्रह्मत्वं बृंहितत्वं स्याज्जीवानां न परात्मता। अस्वतन्त्रस्य जीवस्य कुतो नित्यस्वतन्त्रता' इति स्कान्दे । 'यत्रामृतः स

---

समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥ स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति । नास्याब्रह्मवित्कुले भवति ॥ तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो

पुरुषो ह्यव्ययात्मा'। 'यत्र तत्सत्यस्य परमं निधानम्'। 'अमृतस्यैष सेतुः' 'शरवत्तन्मयो भवेत्' 'ब्रह्म तल्लक्ष्यमुच्यते' 'निरञ्जनः परमं साम्यमुपैति' इत्यादिना मुक्तस्य सर्वत्र भगवत्सकाशात् भेदस्यैवोक्तत्वाच्च ॥ 'ॐ मुक्तोपसृप्यव्यपदेशात्ॐ' 'ॐजगद्व्यापारवर्जंॐ' 'ॐ प्रकरणादसन्निहितत्वाच्च ॐ' इत्यादिना भगवतापि सर्वत्र भेदस्यैव सूचितत्वात्। 'न ते महित्व-मन्वश्नुवन्ति'। 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता'। 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते। तद्यत्स्वभावः कैवल्यं स भवान्केवलो हर' इत्यादेश्च। 'मुक्तेभ्योऽपि मनुष्येभ्यो देवा एव गुणाधिकाः। तेभ्यो वायुस्ततो विष्णुः परिपूर्णगुणः सदा। ये त्वेतदन्यथाविद्युस्ते हि यान्त्यधरं तमः। ये त्वेतदेवं जानन्ति ते यान्ति परमं हरिम्' इति च। 'देवानां सन्ततौ जाताः प्रायशो ज्ञानिनः कृते। बलवद्धेतुतश्चान्ये यस्माद्ब्रह्मविदः सुराः। न सन्ततौ ब्रह्मविदो नराणां ज्ञानिनामपि। प्रायशः स्युः सुराणां च नियमोऽयं कृते युगे। तस्मात्स भगवान्विष्णुर्ज्ञेयः सर्वोत्तमोत्तमः॥ सदा सर्वगुणैः पूर्णो योऽनन्तः पुरुषोत्तमः' इति च ॥(६)॥

प्रीयतां भगवान्मह्यं प्रेष्टप्रेष्टतमः सदा।
मम नित्यं नमाम्येनं परमोदारसद्गुणम् ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**आथर्वणोपनिषद्भाष्यं सम्पूर्णम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**

---

भवति॥ ९ ॥ तदेष श्लोकः (तदेतदृचाऽभ्युक्तम्)। क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वन्त एकर्षिञ्छ्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥ तदेतंत्सत्यमृषिरङ्गिराः पुरोवाच। नैतदचीर्णव्रतोऽधीते ॥ ॐ नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ ११ ॥ **खण्ड १ ॥ अध्याय ४ ॥ (६) ॥**

**॥ आथर्वणोनिषत् समाप्ता ॥**

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# माण्डूकोपनिषद्भाष्यम्

॥ ॐ ॥ पूर्णानन्दज्ञानशक्तिस्वरूपं नित्यमव्ययम् ।
चतुर्धा सर्वभोक्तारं वन्दे विष्णुं परं पदम् ॥

मण्डूकरूपिणा वरुणेन चतूरूपो नारायणोऽत्र स्तूयते । 'ध्यायन्नारायणं देवं प्रणवेन समाहितः । मण्डूकरूपी वरुणस्तुष्टाव हरिमव्ययम्' इति पाद्मे । 'ओमित्युक्तं तु यद्ब्रह्म तदक्षरमुदाहृतम् । ओतमत्र जगद् यस्मादों तस्माद्भगवान्हरिः । तदिदं गुणपूर्त्यैव सर्वमित्येवशब्दितम् । भाविभूत-भवत्कालेष्वेकरूपतया हरिः । सर्वदा नित्य इत्येषा व्याख्योङ्कारस्य कीर्तिता' इति बृहत्संहितायाम् । 'ओमित्याक्रियते यस्मादोङ्कारोऽसावतः परः । सर्वत्वमिति पूर्णत्वं तन्नान्यस्य हरेः क्वचित्' इति नैर्गुण्ये । सर्वमोङ्कार एवेत्यन्यस्य पूर्णत्वनिवारणम् । त्रिकालातीतत्वं च तस्यैव । प्रकृतेरपि त्रिकालातीतत्वं विद्यत इत्यन्यदितिविशेषणम् ॥१॥ 'परमं यो महद्ब्रह्म' । 'तदेव ब्रह्म परमं कवीनाम्' । 'पूर्णमदः पूर्णमिदम्' इत्यादिषु प्रसिद्धं च ब्रह्मणः पूर्णत्वमित्याह । सर्वं ह्येतद्ब्रह्मेति । श्रीब्रह्मादिसकलदेहेषु स्थित्वा

---

॥ श्री माण्डूकोपनिषत् ॥

॥ हरिः ॐ ॥ ॐ मित्येकाक्षरमिदँ सर्वम् ॥ तस्योपव्याख्यानं भूतं भवद्भविष्यदिति । सर्वमोङ्कार एव यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥ सर्वं ह्येतद् ब्रह्म ।

आदानादिकर्ता योऽयं कश्चित्प्रतीयते । जीवानामस्वातन्त्र्यदर्शनात् । सोऽपिस एवेति दर्शयति । अयमात्मा ब्रह्मेति । 'पूर्णस्तु हरिरेवैको नान्यत्पूर्णं कदाचन । विना च प्रकृतिं नान्यत्कालातीतं परात्मनः । कालश्चैव दिशो देवाः प्रकृत्यात्मान ईरिताः । अभिमानात्तु जीवानां न कालातीतता भवेत् । मुक्तानामपि पूर्वत्र कालसम्बन्ध ईरितः । पूर्णत्वं च सदा विष्णोः प्रसिद्धं सर्ववेदतः । सोऽयं विष्णू रमाब्रह्मरुद्रानन्तादिगः सदा । आदानादनकर्तृत्वादात्मा तेषामगोचरः । इति मण्डूकरूपी सन् ददर्श वरुणः श्रुतिम्' इति हरिवंशेषु ॥२॥ 'चतुर्धाऽवस्थितो देहे परमात्मा सनातनः। वैश्वानरो जागरितस्थानगो गजवक्त्रकः । निर्माता बाह्यसंवित्तेर्जीवानां तदगोचरः । अष्टादशमुखान्यस्य पुमाकाराणि सर्वशः । मध्यमं तु गजाकारं चतुर्बाहुः परः पुमान् । पादौ हस्तिकरो हस्ता इति सप्ताङ्ग ईरितः । स्थूलान्भोगानिन्द्रियैः स शुभान्भुङ्क्ते न चाशुभान् । विश्वं स्थूलं समुद्दिष्टं सर्वगम्यत्वहेतुतः । तत्सम्बन्धी नरोऽनाशाद्वैश्वानर उदाहृतः । विनायकस्तु विश्वस्य ध्यानादैद्गजवक्त्रताम् । तथैव तैजसध्यानात्त्रिध्यानादिन्द्र इन्द्रताम्। चतुर्ध्यानाच्च रुद्रत्वं रुद्र आप जनार्दनात् । एवंभूतगुणो विष्णुश्चतुरात्मा परात्परः' इति महायोगे ॥३॥ 'जाग्रद्दर्शनसंस्काररूपत्वात्स्वप्नगं तु यत् । प्रविविक्तं तु तज्ज्ञानकारणोऽन्तर्ज्ञ उच्यत' इति वाराहे ॥४॥ 'सुषुप्तं तु तमो ज्ञेयं हरिं प्राप्य तदावृतः । न कामयेन्नैव पश्येज्जीवः स्वात्मतमो विना । कालं च तस्य स्थानस्य पतिः प्राज्ञो हरिः स्वयम् । चित्तस्थो दर्शयेत्तस्मात्तैजसः स्वप्नकृद्धरिः । न बाह्यं ज्ञापयेद्यस्मात्प्राज्ञस्तेन जनार्दनः । एकीभावं व्रजेतां च तेन विश्वश्च तैजसः । एकीभूतस्तदा प्राज्ञो घनो जीवस्तमोवृतः । तन्मात्रस्य स कालस्य घनप्रदः प्रदर्शनात्' इति प्रकाशिकायाम् । आनन्दमयः पूर्णानन्दः ।

---

अयमात्मा ब्रह्म । सोयमात्मा चतुष्पात् ॥ २ ॥ जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥ स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः ॥ ४ ॥ यत्र सुप्तो न कञ्चन कामं

चेतोमुखः ज्ञानस्वरूपमुखः । प्रज्ञानघन इति विपरीतसमासः । घनप्रज्ञ इति वक्ष्यमाणत्वात् । विषयभोगं विनाऽऽनन्दमात्रभुक्त्वादानन्दभुगिति विशेषः। आनन्दमयत्वचेतोमुखत्वसर्वज्ञत्वसर्वेश्वरत्वादि चतुष्टयेऽपि समम् । अन्यत्रातिदेशार्थमेकत्रानन्दमयत्वं चेतोमुखत्वं चोक्तम् ॥५॥ एष चतूरूप आत्मा सर्वज्ञत्वसर्वेश्वरत्वादिलक्षणः । 'परमात्मा चतूरूपः सर्वप्राणिशरीरगः। विश्वश्च तैजसः प्राज्ञस्तुरीयश्चेति कथ्यते ॥ तानि रूपाणि सर्वाणि पूर्णानन्दमयानि तु । चेतोमुखानि सर्वाणि पूर्णज्ञानस्वरूपतः । मुखशब्दस्तु सर्वस्य देहस्याप्युपलक्षणः । तथापि मुखशब्दोऽयं पूर्णत्वं सूचयेद्विभोः । ज्ञानस्य मुख्यवाचित्वान्मुखवाच्यपि सन्स्वतः' इति मार्कण्डेये । 'पूर्णानन्दस्वरूपस्य क्रीडाभोगो न चान्यथा । यथाऽऽदित्यस्य दीपेन न विशेषोऽस्ति कश्चन' इति ब्रह्मतर्के ॥६॥ 'प्रमाणस्य प्रमाणं च बलवद्विद्यते मुने । ब्रह्मदृष्टान्यतो मन्त्रान्प्रमाणं सलिलेश्वरः । अत्र श्लोका भवन्तीति चकारैव पृथक्पृथक्' इति गारुडे । खण्डचतुष्टयेऽपि पृथक्पृथक् । 'प्रभवः सर्वभावानां विष्णुरेव न संशयः । इत्थं सतां निश्चयः स्यादन्यथा त्वसतां भवेत् ॥७-११॥ सर्वस्य हि प्रणेतृत्वात्प्राणो नारायणः परः । तां सृष्टिं बहुधा

---

कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ ५ ॥ एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्यामी । एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥ अत्रैते श्लोका भवन्ति । बहिःप्रज्ञोः विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः । घनः प्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्मृतः ॥ ७ ॥ दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः । आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ ८ ॥ विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् । आनन्दभुक्तथाप्राज्ञस्त्रिधा भोगं निबोधत ॥ ९ ॥ स्थूलं तर्पयते विश्वं प्रविविक्तं तु तैजसम् । आनन्दं च तथा प्राज्ञं त्रिधा तृप्तिं विजानथ ॥ १० ॥ त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः । वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ११ ॥ प्रभवस्सर्वभावानां सतामिति विनिश्चयः । सर्वं जनयति प्राणश्चेतोंशून्पुरुषः पृथक् ॥ १२ ॥ विभूतिं

प्राहुर्ज्ञानिनोऽज्ञानिनस्तथा ॥१२॥ विष्णुर्विकृतिमायातिमहदादिस्वरूपिणीम् । तत्तद्विविधभूतिस्तु सृष्टिः प्रोक्ता ह्यपण्डितैः । स्वप्नमायासरूपां च केचिदज्ञा जना विदुः ॥१३॥ अविकारस्य चिन्मात्रस्वेच्छयैवाखिलं जगत् । उत्पद्यत इति प्राज्ञाः प्राहुर्ब्रह्मादयोऽखिलाः । पूर्णशक्तेः कुतो माया सार्वज्ञात् स्वप्नवत्कुतः । सर्वदोषव्यतीतस्य विकारः कुत इष्यते । तस्मादेवाविकारस्य विष्णोरिच्छावशादिदम् ॥ यथार्थमेव सम्भूतमिति वेदवचोऽखिलम् । केचित्कालत एवैतां सृष्टिमाहुरकोविदाः । केचिद्रुद्राद्ब्रह्मणश्च प्रधानादिति चापरे । विमूढाः सर्व एवैते यतो नारायणः परः । सर्वकर्ता सर्वशक्तिरेक एव च नापरः । प्रधानकालब्रह्मेशमुखाः सर्वेऽपि तद्वशाः ॥१४॥ तस्यापि विष्णोः सृष्टिं तु केचिदाहुरनैपुणाः । अतृप्तस्यैव भोगार्थं क्रीडार्थं तु विपश्चितः । सा च क्रीडा स्वभावोऽस्य कुतोऽतृप्त्या स्पृहा विभोः' इति हरिवंशेषु ॥ १५ ॥ **१॥ (प्रथमः खण्डः)**

'विष्णुस्तुरीयरूपेण द्वादशान्ते व्यवस्थितः । मुक्तानां प्राप्यरूपोऽसौ व्यवहारे न दृश्यते । सम्यक्समाहितानां तु प्राप्तानां षोडशीं कलाम् । अपरोक्षदृशां क्वापि तुरीयं दृश्यते पदम् । अन्तर्बहिश्च सौप्तं च समाधिज्ञानमेव च । बहिःशब्दादिकं जानन्पश्यन्स्वप्नं तथैव च । यदा भवति साऽवस्था ह्युभयज्ञानशब्दिता । एतत्सर्वं तुरीयेण रूपेण न करोत्यजः । सर्वज्ञानप्रदश्चापि

---

प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः । स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ १३ ॥ इच्छामात्रं प्रभोस्सृष्टिरिति सृष्टौ विनिश्चिताः। कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥१४ ॥ भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहेति ॥ १५ ॥ **॥ १ ॥ प्रथमः खण्डः (अध्याय १, खण्ड १)**

नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यम-लक्षणमचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स

मुक्तस्यैव तुरीयकः' इति ब्रह्माण्डे । 'अमुक्तस्य त्वदृश्यत्वात्षोडशीं वा कलामृते । तुरीयोऽदृष्ट इत्युक्तो ग्रहणादेरगोचरः । विना मुक्तिं ततस्तेनाऽव्यवहार्य इतीरितः । जाग्रदादिप्रवृत्तिस्तु लक्षणं ह्यनुमापकम् । अलक्षणस्तद्राहित्यादचिन्त्यस्तत एव च । तत एव ह्यनिर्देश्यश्चिदानन्दैक-लक्षणः । मुक्तस्य सर्वव्यापारहेतुरेव तुरीयकः । एकः प्रधान उद्दिष्ट आत्मा पूर्णत्वतः श्रुतः । तदेवास्य स्वरूपं यदैकात्म्यं तेन कीर्तितः । प्रत्ययो ज्ञानरूपत्वात्सार आनन्दरूपतः । प्रपञ्चो विस्तृतेर्विष्णुः शम आनन्दरूपतः । उत्कृष्टानन्दरूपत्वादुपशब्दः प्रकीर्तितः । प्रपञ्चं देहबन्धाख्यं तुरीयः शमयेद्यतः। प्रपञ्चोपशमस्तेनाप्युक्तः स भगवान्प्रभुः । निर्दुःखसुखरूपत्वाच्छिवशब्दः श्रुतौ श्रुतः। अन्यथाप्रत्ययो द्वैतं शमयेत्तं यतो हरिः । अद्वैतस्तेन चोद्दिष्टस्तुरीयः पुरुषोत्तमः' इति माहात्म्ये । 'अपेक्ष्य वस्तुयाथार्थ्यं द्वित्वमन्यस्वरूपता । इण् गताविति धातोश्च तज्ज्ञानं द्वैतमुच्यते' इति सङ्कल्पे । स आत्मा स विज्ञेय इति सोऽयमात्मा चतुष्पादिति चतुर्धाविभक्त उच्यते उपसंहारार्थम् । सोऽयमात्माध्यक्षरमिति पृथगारम्भात् । 'विश्वादिरूपो यत्स्वात्मा स विज्ञेयो मुमुक्षुभिः । निर्विशेषोऽपि भगवांश्चतुर्धा समुदीरितः' इति प्रत्यये ॥१॥ सर्वदुःखानां निवृत्तेः कारणभूतस्तुरीयो देवः । 'हरिस्तुरीयरूपेण मोक्षदः सम्प्रकीर्तितः । देवः स सर्वजीवानां गम्यत्वात्समुदीरितः । भावा जीवाः समुद्दिष्टा भवन्त्येते यतो विभोः । ईशानामपि मुक्तानां ईशानः सोऽननाच्छ्रुत' इति प्रत्याहारे ॥२॥ 'कार्यकारणबन्धस्य तदधीनत्वतो विभुः । विश्वादिरूपो भगवान्बद्ध इत्युच्यते श्रुतौ । कुतो बन्धः परस्यास्य बन्धेशस्य चिदात्मनः' इति च । 'स बद्धः स दुःखी स बन्धयति स दुःखयतीति । स जीवः स प्रकृतिः स जीवयति स प्रकरोतीति । सोऽवरः सोऽनित्यः सोऽवरयति

---

आत्मा स विज्ञेयः ॥१॥ अत्रैते श्लोका भवन्ति । निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः । अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ २ ॥ कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्धचतः ॥ ३ ॥ नात्मानं न

सोऽनित्ययतीति' इति कौषारवश्रुतिः । 'विष्णोर्गुणोक्तिपरता मम नित्यं सुरेश्वराः।तदर्थमन्यद्वचनमतस्तस्य विरोधि यत् । तन्ममार्थो न हि क्वापि साहं तत्सरणात्सदा । सरस्वतीति सम्प्रोक्ता तस्माज्ज्ञेया हरेर्गुणा' इति महोपनिषदि ॥३॥ 'नात्मानं न परांश्चैव न सत्यं चापि नानृतम् । प्राज्ञः संवेदयेत्किञ्चिज्जीवकालतमो विना । सुप्त्यवस्थां सुखं चापि विना नान्यत्प्रदर्शयेत् । सर्वं तु दर्शयेन्मुक्तौ तुरीयः परमेश्वरः' इति प्रत्यये । 'स्वतन्त्रे कर्तृशब्दः स्यात्प्राज्ञस्यावेदनं यथा । सर्वप्रदर्शके चैव तुरीये सर्वदर्शनम्' इति ब्रह्मतर्के ॥४॥ 'निद्रायुतास्तु विश्वाद्यास्तदधीना यतो हि सा । यथा भृत्ययुतः स्वामी न ह्यज्ञानं परात्मनः' इति च । 'अभेदमपि तद्ब्रह्म बहुरूपं विशेषतः । करोति न करोतीति व्यवहार्यं स्वशक्तितः' इति च । न संवेदयतीत्यस्वीकारे 'तुर्यं तत्सर्वदृक् सदा' 'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः' इति च विरुद्धम् । द्वैतग्रहणाकारणत्वं तुल्यमित्यर्थः । 'द्वैतं न ग्राहयेत्तुर्यो न च प्राज्ञः कथञ्चन । द्वैतग्रहणबीजं तु निद्रा प्राज्ञं समाश्रिता' इति प्रकटश्रुतिः । विपरीतज्ञानादपि विपरीतज्ञानान्तरं जायते ॥७॥ अनादिमायया विष्णोरिच्छया स्वापितो यदा । तया प्रबोधमायाति तदा विष्णुं प्रपश्यति' इति प्रकाशिकायाम् ॥८॥ 'तन्वा स्वस्वामिसम्बन्धः प्रपञ्चोऽस्य शरीरिणः । वस्तुतोऽसौ न चैवास्ति परमस्य वशे यतः । तन्वादिकस्तथाप्येष ह्यभिमानात्प्रदृश्यते । अतः स विद्यत इति ह्यङ्गीकारो भवेद्यदि । तथापि भगवज्ज्ञानात्स निवर्तेदसंशयः' इति ब्रह्मतर्के । अद्वैतमन्यथाज्ञातं परब्रह्मादिवस्तु

---

परांश्चैव न सत्यं नापि चानृतम् । प्राज्ञः किञ्चन संवेत्ति तुर्यं तत्सर्वदृक्सदा ॥ ४ ॥ द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः । बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ ५ ॥ स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया । न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ ६ ॥ अन्यथागृह्णतः स्वप्नो निद्रातत्त्वमजानतः । विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ ७ ॥ अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ ८ ॥ प्रपञ्चो यदि विद्येत निवर्तेत न संशयः । मायामात्रमिदं द्वैतमद्वैतं

तत् । द्वैतं द्विधा ज्ञातं अन्यथाज्ञातमज्ञैः। परमार्थतः परमेश्वरात। तस्यैव मायामात्रं तदिच्छया निर्मितम् । तदन्यथाज्ञानं तस्मात्तदिच्छयैव निवर्तते । 'परेण ब्रह्मणा यत्तु द्विधा न ज्ञातमञ्जसा । तदद्वैतं परं ब्रह्म तदेव ज्ञातमन्यथा । जीवेन द्वैतमुद्दिष्टं मिथ्याज्ञानं तदेव च । परमार्थात् पराद्विष्णो-र्जातमिच्छावशादनु । मायेतीच्छा समुद्दिष्टा मायामात्रं तदुद्भवम् । उत्तमत्वात् परार्थोऽसौ भगवान्विष्णुरच्युतः' इति च । अनन्यथा इतमवगतमद्वैतं द्वैतं वस्तुस्वरूपापेक्षया द्विधा ह्यन्यथाज्ञातमित्यर्थः ॥९॥ अतो विकल्पः। शारीरादिसम्बन्धः । केनचिदज्ञानादिना कारणेन कल्पितोऽप्युपदेशान्निवर्तते ।अयं सतां वादः । ज्ञाते सति परब्रह्मणि द्वैतमन्यथाज्ञानं निवर्तत इति । 'विकल्पो देहबन्धादिः केनचित्कारणेन तु । कल्पितो विनिवर्तेत गुरुवाक्यादसंशयः। एष एव सतां वादो ज्ञाते ब्रह्मणि तत्त्वतः । निवर्ततेऽन्यथाज्ञानं तत आनन्दमेत्यसौ' इति च ॥१०॥ **२ ॥ (द्वितीयः खण्डः)**

अधिकं सर्वत अविनाशि चेत्यध्यक्षरम् । अधिका एव मात्रा अंशा यस्य तदधिमात्रम् । अ इत्यनेनाभिधानेनाक्रियत इत्यकारः । तत्र पूर्वोक्तो वैश्वानरः प्रथमा मात्रेत्याद्यनुवादः । अकार इत्यादिकं विधेयम् । प्राज्ञस्तैजसश्चादिरस्येत्यादिमान् । सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति विश्वः। स्वप्नादुत्थाने तैजसात् । आदिश्चास्योपासकस्य भवति ॥१॥ शरीराभिमानात् उत्थाप्य कर्षतीत्युत्कर्षः । निद्राविषयानुभवश्चानेन क्रियत इत्युभयत्वं

---

'परमार्थतः ॥ ९ ॥ विकल्पो विनिवर्तेत कल्पितो यदि केनचित्। उपदेशादयं वादो ज्ञाते द्वैतं न विद्यत इति ॥ १० ॥ ॥२॥ **द्वितीयः खण्डः (अध्याय १, खण्ड २)**

सोयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा अकार उकारो मकार इति। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्रा । आप्तेरादिमत्त्वाद्वा आप्नोति ह वै सर्वान्कामानादिश्च भवति । य एवं वेद ॥१॥ स्वप्नस्थानस्तैजस उकारो द्वितीय मात्रा।

समानः सर्वेषां मध्यस्थो भवति । मितेरन्तर्गमनात् । 'अधिकत्वाच्च नित्यत्वादध्यक्षरमुदाहृतः । येंऽशास्तस्य तु सर्वेऽपि पूर्णाः प्रत्येकशः प्रभोः । अतोऽधिमात्रमुद्दिष्टो मात्रा अंशा उदाहृताः । श्रुतः स विष्णुरोंकार ओमित्याक्रियते यतः । आद्यस्तदंशो ह्याप्तिस्स्याद्विषयानापयेद्यतः । जीवस्य तु यतः प्राज्ञात्तैजसाद्वा समुत्थितः । अविभागोऽपि भगवानादिमांस्तेन कीर्तितः। तस्मादुत्पद्यते मुक्तः सज्ज्ञानानन्दलक्षणः । आप्नोति विषयान्सर्वान्निद्राया विषयस्य च । उभयोः कारणत्वेन ह्युभयस्तैजसः स्मृतः । देहाभिमानादुद्धृत्य कर्षति स्वप्नमण्डले । उत्कर्षत्वं ततस्तस्य तज्ज्ञानी ज्ञाननित्यताम् । आप्नोति देहादुत्कृष्य स्वात्मानं सर्वमोक्षिणाम् । मध्यस्थः स भवेत्स्नेहाद्दोषाभावाच्च सर्वशः ॥२॥ स्वात्मन्यन्तर्गमयति मानमन्तर्गतिः स्मृता । जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद्यतः । प्राज्ञो मानमपीतिश्च तज्ज्ञोऽप्येवं विमुक्तिगः । व्याप्त्यान्तर्गमयेत्सर्वं दुःखाद्यं तु विलापयेत् । अणूनामपि जीवानां प्रकाशो व्यापको भवेत् । अण्डमात्रे बहिश्चापि देवतानां यथाक्रमम् । अतोऽन्तर्गमनं मुक्तौ जीवेषु जगतो भवेत्' इति ब्रह्मतर्के ॥३॥ मात्रासम्प्रतिपत्तौ अंशध्याने । आदिमत्त्वं विश्वस्य विद्यते । तदुपासकस्यापि भवतीत्यादि सामान्यम् ॥४॥ अमात्रेऽप्यगतिर्न विद्यते । प्रतिदिवसं विभाग एकीभावश्च विद्यते विश्वादीनाम् । तुरीयस्य तन्न विद्यत इत्यमात्रः । विश्वादीनां व्यवहारकारणत्वं विद्यते । तुरीयस्य तन्न विद्यत इत्यतो गम्यत्वमपि नास्तीत्याशङ्कां निवारयति अगतिर्नविद्यत इति । आत्मानं संविशन्तीति गतिवचनात् । 'आदिमत्त्वेन सामान्यमुपास्येन भवेदिति ।

---

उत्कर्षादुभयत्वाद्वा । उत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति। य एवं वेद ॥२॥ सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा । मितेरपीतेर्वा । मिनोति ह वा इदं सर्वमपीतिश्च भवति । य एवं वेद ॥३॥ अत्रैते श्लोका भवन्ति । विश्ववस्यात्वविवक्षायामादिसामान्यमुत्कटम् । मात्रासम्प्रतिपत्तौ स्यादादिसामान्यमेवच ॥४॥ तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम् । मात्रासम्प्रतिपत्तौ स्यादुभयत्त्वं

उपासकस्य सञ्ज्ञानन्सर्ववन्द्यो भवेत्पुमान् । सामान्यत्रयमप्येतत्तुल्यं मुक्तिगतत्वतः । अमात्रत्वं तुरीयस्य त्वविभागाद्दिनेदिने । जाग्रदादेरकर्ताऽपि गम्योऽसौ ज्ञानिनां भवेत्' इति च । 'आदिमत्त्वादिसामान्यं तुल्यं मोक्षोपभोग्यतः । अमात्रत्वं तुरीयस्याप्यविभागाद्दिनेदिने' इत्यात्मसंहितायाम् ॥ ५-८ ॥ **३ ॥ (तृतीयः खण्डः)**

आत्मैव भूत्वान्याभिमानं त्यक्त्वा परमात्मनैव परमात्मानं प्रविशत्युपासकः । अव्यवहार्यत्वादिकमत्र सममिति दर्शयितुं पुनरप्युक्तमव्यवहार्यत्वादिकम् । 'तुरीयं नादनामानं हरिं ज्ञात्वा परं पदम् ।

---

तथाविधम् ॥ ५॥ मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम् । मात्रासम्प्रतिपत्तौ तु लयसामान्यमेव च ॥ ६ ॥ त्रिषु धामसु यत्तुल्यं सामान्यं वेत्ति निश्चितम् । स पूज्यस्सर्वभावानां वन्द्यश्चैव महामुनिः ॥ ७ ॥ अकारो नयते विश्वमुकारश्चापि तैजसम् । मकारश्च पुनः प्राज्ञं नामात्रे विद्यतेऽगतिरिति ॥ ८ ॥ **तृतीयः खण्डः ॥ ३ ॥(अध्याय २, खण्ड १)**

अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत ॐकार आत्मैव संविशत्यात्मनाऽऽत्मानम् । य एवं वेद ॥१॥ अत्रैते श्लोका भवन्ति । ओंकारं पादशो विद्यात्पादामात्रा न संशयः । ओंकारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥ २ ॥ युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ ३ ॥ प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः । अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ ४ ॥ सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च । एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ ५ ॥ प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् । सर्वव्यापिनमोंकारं मत्वा धीरो न शोचति ॥ ६ ॥ अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमश्शिवः । ॐकारो विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो जन इति ॥ ७ ॥ **॥ ४ ॥ चतुर्थः खण्डः (अध्याय २, खण्ड २)**

**॥ श्रीमाण्डूकोपनिषत् समाप्ता ॥**

तमेव प्रविशेच्छुद्धरूपी तत्सदृशात्मवान् । ज्ञानानन्दौ च शक्तिश्च तथापि न समाः क्वचित् । विमुक्तस्यापि जीवस्य पारतन्त्र्यं च नित्यदा ॥१॥ चतूरूपस्यास्य विष्णोर्नाम प्रणव इत्यपि । जाग्रदादिप्रणयनात् ॥२॥३॥ स एव ब्रह्म बृंहणात् ॥४॥ ओमित्याक्रियमाणत्वादोङ्कारः स प्रकीर्तितः। आदिमत्त्वादयो ह्यर्था ओमित्यस्य श्रुतौ श्रुताः । अपूर्वः कारणाभावान्नाशाभावादनन्तरः । पराधीनस्थित्यभावादनपर उदाहृतः । सर्वगत्वादबाह्यश्च तं ज्ञात्वा प्रविमुच्यते ' इति च । परत्वमपरत्वं च विष्णोरेकस्य वै यदा । श्रूयते न तु सामर्थ्यभेदस्तत्र कथञ्चन। अवतारस्य पूर्वत्वात्पौर्वापर्यमुदाहृतम्' इति ब्रह्मतर्के। पूर्वावतारे पश्चिमावतारेऽपि पूर्ण एवेति प्रणवो ह्यपरं ब्रह्मेत्यादेरर्थः ॥५-७॥ ४॥ **(चतुर्थः खण्डः)**

एकोऽपि निर्विशेषोऽपि चतुर्धा व्यवहारभाक् ।
यस्तं वन्दे चिदात्मानं विष्णुं विश्वादिरूपिणम् ॥*॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**माण्डूकोपनिषद्भाष्यम् सम्पूर्णम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**
*******

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# तलवकारोपनिषद्भाष्यम्

॥ॐ॥ अनन्तगुणपूर्णत्वादगम्याय सुरैरपि ।
सर्वेष्टदात्रे देवानां नमो नारायणाय ते ॥

'वैजयन्ते समासीनमेकान्ते चतुराननम् । विष्णोर्विविदिषुस्तत्त्वं पर्यपृच्छत्सदाशिवः । यदिदं पुरुषावश्यं तत्र तत्र पतेन्मनः । केन तत्प्रेरितं याति प्राणः सर्वोत्तमस्तथा । चक्षुः श्रोत्रं तथा वाचं को देवो विनियोजयेत् । इति पृष्टास्तदा ब्रह्मा प्राह देवमुमापतिम् । ध्यात्वा नारायणं देवं सर्वाधारमनूपमम्।

---

**॥ तलवकारो(केनो)पनिषत् ॥**

॥हरिः ॐ॥ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥१॥ श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥ न तत्र चक्षुर्गच्छति न वागच्छति नो मनो न विद्म न विजानीमो यथैतदनुशिष्यात् ॥३॥ अन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तव्द्याचचक्षिरे ॥ ४ ॥ यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धिनेदं यदिदमुपासते ॥५॥ यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥६॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुमासते ॥७॥ यच्छ्रोत्रेण न श्रृणोति येन श्रोत्रमिदं श्रुतम् । तदेव ब्रह्म

सर्वज्ञं सर्वशक्तिं च सर्वदोषविवर्जितम् । यः प्राणस्य प्रणेता च चक्षुरादेश्च सर्वशः । अगम्यः सर्वदेवैश्च परिपूर्णत्वहेतुतः । प्राणादीनां प्रणेता च सर्ववेत्ता च सर्वशः । सर्वोत्तमश्च सर्वत्र स विष्णुरिति धार्यताम् ॥१॥ **(प्रथमः खण्डः)**

यं सम्यङ्नैव जानाति कश्चिन्निरवशेषतः । सर्वात्मना विजानामीति तु यस्य मतं भवेत् । तस्याज्ञातः स भगवान्यो नैवं मन्यते सदा । ज्ञातस्तस्य तथास्यैव निःशेषं मननं कृतम् । इति यो मन्यते नास्य मतः स पुरुषोत्तमः । नातिवेद्यो न चावेद्यस्तस्मात्स परमेश्वरः । नेदं जीवस्वरूपं तद्ब्रह्म विष्णवाख्यमव्ययम् । किन्तु यत्ते समीपस्थमासते विनियामकम् । तदेव ब्रह्म विद्धि त्वं विष्णवाख्यं परमव्ययम् । नियामकं तद्देवानां मर्त्यानां किमुतोत्तमम् । तत्प्रसादं विना जीवे मन्तव्या न प्रवृत्तयः । किमु जीवस्य तद्भावो न मन्तव्य इतीर्यते ॥ **२** ॥ **(द्वितीयः खण्डः)**

इत्यत्राख्यायिकां वच्मि श्रृणु तां त्वं महेश्वर । स्थित्वा देवेषु तद्ब्रह्म व्यजयद्दैत्यदानवान् । देवेभ्योऽर्थाय विजयं ते देवा मेनिरे स्वकम् । आविष्टा असुरैस्तेषां प्रबोधाय जनार्दनः । यक्षरूपः प्रादुरभूदुमाशिवसमन्वितः ।

---

त्वं विद्धि नेदं यदिदमुपासते ॥८॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ९ ॥ १ ॥ **प्रथमः खण्डः ॥**

यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम् । यदस्य त्वं यदस्य देवेष्वथ नू मीमांस्यमेव ते मन्ये विदितम् ॥१॥ नाहं मन्ये सुवेदेति । नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥२॥ यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ॥३॥ प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥४॥ इह चेदवेदीदथ सत्यमस्ति । न चेदिहावेदीन्महती विनष्टिः । भूतेषु भूतेषु विचित्य धीराः । प्रेत्यास्माल्लोकादमृता भवन्ति ॥ ५ ॥ २ ॥ **द्वितीयः खण्डः ॥**

ब्रह्म ह देवेभ्यो विजिग्ये । अथ तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्त । अस्माकमेवायं विजयो अस्माकमेवायं महिमेति ॥१॥ तद्धैषां विजज्ञौ ॥

ब्रह्मणा चापि सहित एतेभ्योऽपि परो ह्यहम् । एतेऽपि मे भृत्यभूताः परिवार्य व्यवस्थिताः। इति ज्ञापयितुं विष्णुः सह तैरप्युपागतः । यूयमेतानपि ज्ञातुमशक्ताः किमु मामिति । तज्ज्ञानार्थं हुताशश्च नासिक्यो वायुरेव च । इन्द्रश्च क्रमशो जग्मुस्तं ज्ञातुं नैव चाशकन् । तत्रेन्द्रोऽधिकबुद्धित्वात्पृच्छतीति जनार्दनः । मत्तः शिवाद्ब्रह्मणश्च श्रोतुं नैवापि शक्तिमान् । इति ज्ञापयितुं तत्र नादृश्यत स केशवः । एषैव ज्ञानदाने ते योग्योमेति व्यदर्शयत् ॥३॥ **(तृतीयः खण्डः)**

उमा सा सम्यगाचष्ट तस्मै विष्णुं परं पदम् । यस्माद्ब्रह्मा च वायुश्च शेषवीन्द्रौ शिवस्तथा । सभार्या गर्विणो नासन्सुरेभ्यस्तेऽधिकास्ततः । इन्द्रस्तु प्रथमं ब्रह्म व्यजानात्तेन तूत्तमः । दक्षादिभ्यस्तथा कामस्तज्ज्ञातुं पूर्वमुक्तवान् । दक्षो बृहस्पतिश्चैव मनुः कामात्मजस्तथा । सूर्याचन्द्रमसौ धर्मो

---

तेभ्यो ह प्रादुर्बभूव। तन्न व्यजानन्त । किमिदं यक्षमिति ॥२॥ तेऽग्निमब्रुवन् । जातवेद एतद्विजानीहि किमेतद्यक्षमिति । तथेति ॥३॥ तदभ्यद्रवत् । तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥४॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ॥५॥ तस्मै तृणं निदधावेतद्दहेति । तदुप प्रेयाय सर्वजवेन । तन्न शशाक दग्धुम् । त तत एव निववृते। नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥६॥ अथ वायुमब्रुवन् । वायवेतद्विजानीहि किमेतद्यक्षमिति । तथेति ॥७॥ तदभ्यद्रवत् । तमभ्यवदत्कोऽसीति । वायुवाअहमस्मीत्यब्रवीत् । मातरिश्वा वा अहमस्मीति ॥८॥ तस्मिंस्त्वयि किं वीर्यमिति । अपीदं सर्वमाददीय यदिदं पृथिव्यामिति ॥९॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुप प्रेयाय सर्वजवेन तन्न शशाकादातुम्। स तत एव निववृते । नैतदशकं विज्ञातुम् । यदेतद्यक्षमिति ॥ १०॥ अथेन्द्रमब्रुवन् । मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत् । तस्मात्तिरोदधे ॥ ११ ॥ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमाँ हैमवतीम् । ताँ होवाच किमेतद्यक्षमिति ॥ १२ ॥ ३ ॥ **तृतीयः खण्डः ॥**

ब्रह्मेति होवाच । ब्रह्मणो वा एतद्विजये देवा अमहीयध्वमिति । ततो ह वै विदाञ्चकार ब्रह्मेति ॥१॥ तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते

वरुणश्चोचुरोमिति । नासिक्यवायुरग्निश्च प्रथमं तदपश्यताम् । सर्वदेवाधिकास्तस्मादेते देवाः प्रकीर्तिताः । एतेभ्यश्चेन्द्रकामौ तु ताभ्यां ब्रह्मादयोऽधिकाः । एतेषामवमो वह्निः परमो विष्णुरुच्यते । अन्तराले स्थितास्त्वन्ये ब्रह्माद्याः पूर्वमीरिताः । अग्निः पश्चाद्वचजानात्तदिन्द्रवाक्यात्ततोऽवमः । तस्माद्विष्णवभिसम्बन्धात्पारावर्यं सुरेष्विदम् । व्यद्योतयद्विद्युदादीन्कपिलाख्यस्तु यो हरिः । अक्ष्णोर्निमेषणं कृत्वा यः शेते क्षीरसागरे । स एवैकः परं ब्रह्मेत्येवं तस्योपदेशनम् । अधिदैवे तथाध्यात्मे यं मनो गच्छतीव च । सम्यङ्न गच्छति क्वापि मनो येन स्मरत्यपि । सोऽनिरुद्धाख्य ईशेशः परं ब्रह्मेति कीर्त्यते । स विष्णुस्तद्वनं नाम ततत्वाद्वननीयतः । एवमेनं तु यो वेद भवेत्सर्वैरपेक्षितः । एतच्छ्रुत्वा हरोऽपृच्छद्ब्रह्माणं पुनरेव तु । विद्याकारं मम ब्रूहीत्युक्तो ब्रह्माह तं पुनः । विद्यावेद्यं तव प्रोक्तमास्थानं ते वदाम्यहम् । तपोदमस्वधर्मेषु ये स्थितास्तेषु तिष्ठति । विद्यास्थानानि तस्यास्तु वेदा अङ्गानि निर्णयः । वेदैतामेवमखिलं यो विष्णौ प्रतितिष्ठति' इत्यादि ब्रह्मसारे । विद्युतः सूर्यादिप्रकाशान् । आसमन्ताद्व्यद्युतत्प्राकाशयत् । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति वचनात् । 'तमेव

---

ह्येनन्नेदिष्ठं पस्पृशुः । ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ॥२॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान् । स ह्येनन्नेदिष्ठं पस्पर्श । स ह्येनत्प्रथमो विदाञ्चकारब्रह्मेति ॥ ३ ॥ तस्यैष आदेशो यदेतद्विद्युतोऽभिव्यद्युतदा ३ इति। न्यमीमिषदा ३ इत्यधिदैवतम् ॥ ४ ॥ अथाध्यात्मम् । यदेतद्गच्छतीव च मनोऽनेनैव तदुपस्म॰ति। अभीक्ष्णं सङ्कल्पः ॥ ५ ॥ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यम् । स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥ उपनिषदं भो ब्रूहीति । उक्ता त उपनिषत् । ब्राह्मीं वाव त उपनिषदमब्रूमेति ॥ ७ ॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा । वेदाः सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥ यो ह वा एतामुपनिशदमेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति ज्येये प्रतितिष्ठति ॥९॥४॥ **चतुर्थः खण्डः ॥**

**॥ इति तलवकारोपनिषत्समाप्ता ॥**

भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति च । न्यमीमिषत् आसमन्तान्निमीलिताक्षमभवत् । 'स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि । अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मा निशि सुप्तशक्तिषु' इति वचनात् । पूर्णत्वाच्च आः । अभीक्ष्णं सङ्कल्प इति मनसो विशेषणम् । सङ्कल्पकमित्यर्थः । सप्रतिष्ठां सायतनामुपनिषदं ब्रूहीत्युक्ते सम्यगेव मयोपनिषत्स्वरूपमुक्तम् । तत्र वक्तव्यं नास्ति । तपो दमः कर्म च विद्यायाः प्रतिष्ठा । तद्वत्सु विद्या प्रतितिष्ठतीत्यर्थः । सत्यमिति मीमांसा । 'निर्णीयते यतः सम्यगिदं सत्यमिति स्फुटम् । श्रुतिस्मृत्युदितं सर्वं व्यक्तं मीमांसयैतया । सत्यमित्युच्यते तस्मान्मीमांसा ब्रह्मनिश्चये' इति शब्दनिर्णये । 'ऋग्यजुः सामाथर्वाख्याः पञ्चरात्रं च भारतम् । मूलरामायणं चैव पुराणं भगवत्परम् । वेदा इत्युच्यते सद्भिः शिक्षाद्यं स्मृतयस्तथा । अङ्गानि सत्यं मीमांसा तद्विद्यायतनं त्रयम्' इति विद्यानिर्णये ॥४॥ **(चतुर्थः खण्डः)**

यश्चिदानन्दसच्छक्तिसम्पूर्णो भगवान्परः ।
नमोऽस्तु विष्णवे तस्मै प्रेष्ठाय प्रेयसां च मे ॥ ❋॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**तलवकारोपनिषद्भाष्यं सम्पूर्णम् ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**

॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# काठकोपनिषद्भाष्यम्

॥ ॐ ॥ नमो भगवते तस्मै सर्वतः परमाय ते ।
सर्वप्राणिहृदिस्थाय वामनाय नमो नमः ॥

'अग्नौ विष्णुं सदा ध्यायंस्त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत स तु प्राप्य स्वर्गं तत्र भयातिगः । उष्य मन्वन्तरं कालममृतत्वं भजेत्क्रमात्' इति ब्रह्मसारे । 'इच्छन्वाजश्रवोनप्ता ददौ सर्वस्वदक्षिणाम् । उद्दालकस्स्वर्गलोकं ददौ गाश्च निरिन्द्रियाः । मां दत्वापि न ते गावो दातव्या ईदृशा इति । उवाच पुत्रस्तं बालस्तं शशाप पिता स्वयम् । स जगाम यमं बालो ब्रह्मचारी यमस्य तु । पत्न्या सम्पूज्यमानोऽपि जग्राहार्घ्यादिकं न तु । आगते तु यमे प्राह यमं सोदकमाहर । इत्युक्तस्स यमस्तं तु सम्पूज्याऽदाद्वरत्रयम् ।

---

॥ काठकोपनिषत् ॥

॥ हरिः ॐ ॥ उशन्ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नाचिकेतानाम पुत्र आस ॥ १ ॥ तँ ह कुमार सन्तं दक्षिणासु नीयमानासु श्रद्धा विवेश ॥२॥ पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥ स होवाच पितरं तत कस्मै मां दास्यतीति । द्वितीयं तृतीयं तं होवाच मृत्यवे त्वा ददानीति ॥ ४ ॥ बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किंस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥ अनुपश्य यथा पूर्वे प्रतिपश्य तथाऽपरे । सस्यमिव मर्त्यः

सौमनस्यं पितुश्चैव नाचिकेताग्निगं हरिम् । मुक्ते स्थितं च तं विष्णुमिति प्रादाद्वरत्रयद्भ्रख' इति गतिसारे ॥

'अग्रयत्वादग्निनामाऽसौ नाचिकेताग्निगो हरिः। लोको विष्णोरनन्तस्य तज्ज्ञानान्नित्य आप्यते । प्रतिष्ठा सर्वलोकस्य स विष्णुस्सर्वहृद्गतः । स एव सर्वलोकादिस्तं ज्ञात्वा मुच्यते ध्रुवम्' इति च ।

या इष्टका या इष्टकादेवताः। 'इष्टकादेवतां विष्णुं षष्ठ्युत्तरशतत्रिकम् । यथावदेव विज्ञाय मुच्यते कर्मबन्धनात्' इति च ।

त्रिभिरेत्य सन्धिं वेदैरविरुद्धः । वेदोक्तप्रकारेण भगवत्तत्त्वादिकं जानन्नित्यर्थः। त्रिकर्मकृत् यज्ञदानतपःकर्ता । 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति वचनात् ।

---

पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥ वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान्। तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥ आशाप्रतीक्षे सङ्गतँ सूनृतां चेष्टापूर्ते पुत्रपशूँश्च सर्वान्। एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥ तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन् ब्रह्मन्नतिथिर्नमस्यः। नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु। तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥ ९ ॥ शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो। त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥ यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखँ रात्रीः शयिता वीतमन्युस्त्वां ददृशिवात्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥ स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥ स भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥ प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतं निहितं गुहायाम् ॥ १४ ॥ लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा । स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनराह तुष्टः ॥ १५ ॥ तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भविताऽयमग्निः सृङ्कां चेमामनेकरूपां गृहाण ॥ १६ ॥ त्रिनाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ १७ ॥

त्रयमेतत् 'या इष्टका' इत्यादि । 'ब्रह्मेति वेद उद्दिष्टस्तस्माद्व्यक्तो यतो हरिः । ब्रह्मजस्तेन कथितस्स एव ज्ञोऽखिलज्ञतः' इति नामनिरुक्तौ । अनेकरूपांस्वर्णमयीम् । 'बहुरूपं च पुरटं कार्तस्वरमितीर्यते' इत्यभिधानात्। 'यमोऽनुवादसन्तुष्टो वह्नेस्तन्नामतामपि । सृङ्कां स्वर्णमयीं चैव कण्ठमालामदाद्विभुः' इति पाद्मे । लोकादिः प्रतिष्ठा ब्रह्मजज्ञोऽनन्त-लोकाप्तिरित्यादिविशेषणैश्च भगवानेव । 'स्तोममहदुरुगायं प्रतिष्ठाम्' इति परामर्शाच्च । भगवतो ह्युरुगायनाम प्रसिद्धम् । गुहानिहितत्वं च तस्यैव विशेषतः प्रसिद्धम् । न चाग्निपरिज्ञानमात्रेण अनन्तलोकाप्तिर्भगवज्ज्ञानं विना । 'तद्वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' इत्यादि श्रुतेः । न च मुख्ये सत्यमख्यार्थो युज्यते ।

प्रेते मुक्ते मनुष्ये नियामकत्वेन भगवानस्तीति ज्ञानिनो वदन्ति । नास्तीत्यज्ञाः । तस्य नियामकस्य स्वरूपं यथावदहं विद्याम् । 'अस्य विस्रसमानस्य शरीरस्थस्य देहिनः । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वै तदि'ति परिहाराच्च मुक्तेस्थितो भगवान्पृच्छ्यत इति सिद्धम् । देहाद्विशेषेण मोचनं नाम मुक्तिरेव । मुक्तेरपि मरणात्मकत्वान्मरणमित्यपि भवति । स्थूलदेहपरित्यागस्तु विस्रंसमानस्येत्यनेनैवोक्तो भवति । 'अग्निस्थं परमात्मानं सामान्याज्ज्ञानतोऽपि तु । अजानतस्तु मुक्तौ च जीवान्तः

---

त्रिनाचिकेतस्त्रयमेतद्विदित्वा य एवत्वमग्निँ्स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि त्वं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं विद्वाँश्चिनुते नाचिकेतम् । स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥ एष तेऽग्निर्नाचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं परं नचिकेतो वृणीष्व ॥ १९ ॥ येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायगस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वृतस्तृतीयः ॥ २० ॥ देवैरत्रापि विचिकित्सितं पुरा न हि सुज्ञेयोऽणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥

स्थितमीश्वरम् । नियामकं च जीवानां मुक्तानामपि सर्वदा । गुणान् सर्वोत्तमत्वादीनविज्ञाय हरेस्तथा । नैव मुक्तिर्भवेत्तस्मात्कृच्छ्रात्तदवदद्यमः। तस्य गोप्यत्वविज्ञप्त्यै तथाप्यग्निस्थवेदनात् । सुखाधिक्यं भवेन्मुक्तौ तस्मात्तत्पृथगीरितमि'ति तत्वसारे । 'स्थाणुमन्येऽनुसँयन्ति यथाकर्म यथाश्रुतम्' इत्युक्त्वा, 'य एषु सुप्तेषु जागार्ति कामं कामं पुरुषो निर्मिमाण' इति वचनाच्च, जीवेषु स्थितो भगवान्पृच्छ्यत इति सिद्धम् । मृतजीवे स्थितो मुक्तजीवे स्थितश्चोभयात्मको भगवान्विवक्षित इत्येतस्माच्चाविरोधः। 'गुह्यं तत्परमं ब्रह्म शीर्यमाणं शरीरिणम् । सम्प्राप्तमपि जीवेषु जागर्ति स्वपितेष्वपि' इति ब्रह्माण्डे ।

धारकत्वाद्धर्मो भगवान् । मरणे स्थितं भगवन्तं मानुप्राक्षीः । महति साम्पराये मुक्तौ **॥ १ ॥ १ ॥**

---

देवैरत्रापि विचिकित्सितं किल त्वं च मृत्या यन्न सुज्ञेयमात्थ । वक्ता वास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥ २२ ॥ शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २३ ॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥ २४ ॥ ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामांश्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः ॥ २५ ॥ आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः । श्वोऽभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्तगीतम् ॥ २६ ॥ न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वाम् । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥ अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वाधस्थः प्रजानन् । अभिध्यायन्वर्ण-रतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥ यस्मिन्निदं विचिकित्सन्ति मृत्यो यत् साम्पराये महति ब्रूहि नस्तत् । योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥ **इति प्रथमाध्यायस्य प्रथमा वल्ली ॥ १ ॥१॥**

सृङ्कां शृङ्खलाम् । अन्यो भगवानन्योऽहमित्यजानन्ननन्यः । तेन प्रोक्ते गतिर्ज्ञानं नास्ति । 'प्रोक्ताऽऽन्येनैव सुज्ञानाय प्रेष्ठ' इति वाक्यशेषात् । 'जीवानां चैव विष्णोश्च यो न वेत्ति भिदां पुमान् । तदनुव्रताश्च ये केचित्तेषां ज्ञानं न जायते' इति ब्रह्मवैवर्ते ।

आख्यं विष्णवाख्यं नित्यं शेवधिरिति जानामि । नित्यमाख्य विष्णुविषयैर्द्रव्यैर्मनआदिभिः । आख्यनित्यविषयैर्विष्णवाख्यनित्यविषयैर्द्रव्यैः। नित्यं भगवन्तं प्राप्तवानस्मि। ध्रुवो भगवान्। अध्रुवैस्तद्भक्तिवर्जितैर्न प्राप्यते।

क्रतोरानन्त्यहेतुम् ।स्तोमैरपि सर्वात्मना प्राप्तुमशक्यम् । स्तोमेभ्योऽपि

---

अन्यच्छ्रेयोऽन्यदुतैव प्रेयः ते उभे नानार्थे पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥ श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः । श्रेयो धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमान्वृणीते ॥ २ ॥ स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः। नैतां सृङ्कां वित्तमयीमवाप्तो यस्यामज्जन्ति बहवो मनुष्याः ॥ ३ ॥

दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवोलोलुपन्तः ॥ ४ ॥ अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ५ ॥ न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥ श्रवणायापि बहुभिर्यो न लभ्यः श्रृण्वन्तो बहवो यन्न विद्युः । आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥ न नरेणावरः प्रोक्त येषु सुज्ञेयो बहुधा चिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान्ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥ नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ । यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥ जानाम्यहँ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् । ततो मया नचिकेताश्चितोऽग्निरनित्यद्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥

कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम्। स्तोममहदुरुगायं प्रतिष्ठां दृष्ट्वाधृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥ ११ ॥

महान्तम् । उरुगायमित्युक्तत्वाच्च न जीवविषयोऽयं प्रश्नः। 'शरो ह्यात्माब्रह्म तल्लक्ष्यमुच्यते'। 'शरवत्तन्मयो भवेत्' । 'अभयं तितीर्षतां पारम्' । 'तादृगेव भवति' इत्यादौ सर्वत्र भेदस्यैवोक्तेश्च न जीवाभेदः । नाचिकेतं शकेमसीत्युक्तत्वाच्च नाचिकेताग्निस्थो भगवानेवोच्यत इति सिद्धम्। उरुगायं दृष्ट्वा कामस्याप्तिमत्यस्राक्षीः । न च मृत्वा यमं प्राप्तस्य नचिकेतसो मृतोऽस्ति न वेति संशयोऽस्ति ।

गह्वरे मुक्तजीवे स्थितम् । प्रवृह्य जीवात्पृथक्कृत्य। 'मुक्तजीवे स्थितं विष्णुं विदित्वा जीवतः पृथक् । मोदते मोदनीयं तं प्राप्य मुक्तस्सदैव च' इति महावाराहे । 'एतद्ध्येवाक्षरं ब्रह्म विष्णवाख्यं परमव्ययम् । सर्वस्यालम्बनं ज्ञात्वा मुच्यतेनात्र संशयः' इति च। 'देहोत्पत्तिविनाशाख्यौ ज्ञानिनोऽप्युद्भवाऽभवौ । न कुतश्चिद्यतो विष्णुर्ज्ञायतेऽतस्तदीक्षणात् । भावाऽभावौ न विदुषो यस्माज्जीवो न कश्चन । जायते म्रियते वापि स्वरूपेण कथञ्चन । अजो नित्योऽविकारश्च जीवः पुरमणन्नपि' इति च । अयं भगवान्कुतोऽपि न बभूव यस्मादतस्तद्वेत्तापि विपश्चिन्न जायते न म्रियते च । यतः कश्चिज्जीवः स्वतो न बभूव । देहसम्बन्धाद्धि जायते । विपश्चितस्तु देहसम्बन्धाभावान्न जायते न म्रियते च ।

---

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठ पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२॥ एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृद्धधर्ममणुमेनमाप्य । स मोदते मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥ १३ ॥ अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४॥ सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदँ संग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥ एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥ एतदालम्बनँ श्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७॥ न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यशशाश्वतोऽयं पुराणो न हन्यते हन्यमानेऽपि देहे ॥ १८॥ हन्ता चेन्मन्यते

जीवस्यापि स्वतो मरणाभावादुभौ तौ न विजानीतः। एवं नित्यस्य जन्तोर्गुहायां निहितः। ए विष्णौ ऋतुर्यस्यसोऽक्रतुस्तन्निश्चयः। आत्मनः सकाशान्महिमानं महामानम्। 'जीवाद्गुणपरिमाणं यस्माद्विष्णोर्महत्तरम्। तस्माज्जीवात्स महिमा विष्णुरित्युच्यते श्रुताविʼ ति च। ऐश्वर्यादेवाऽऽसीनो दूरं व्रजतीत्यादि 'आसीनो दूरं व्रजति शयानो याति सर्वतः। ऐश्वर्याद्भगवान्विष्णुर्विरुद्धं घटयत्यसाविʼ ति च ॥ **१ ॥ २ ॥**

'आत्मान्तरात्मेति विभुरेक एव द्विधा स्थितः। स विष्णुः परमे वायौ परेभ्योऽप्यूर्द्धरूपके। शुभान्पिबति भोगान्स च्छायेव विदुषां प्रभुः। आतपः पापिनां नित्यं मर्यादा विष्णुयाजिनाम्। संसारस्य च पारस्थस्स विष्णुर्द्विस्वरूपकः। देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः सोमवित्तपसूर्याऽप्या अश्व्यग्नीन्द्रेन्द्रसूनवः। यमो दक्षश्चेन्द्रियेशास्सुपर्णी

---

हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥ अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥ आसीनो दूरं व्रजति शयानो याति सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥ अशरीरँ शरीरेषु अनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥ नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम॥ २३ ॥ नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४॥ यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥ **इति प्रथमाध्यायस्य द्वितीया वल्ली ॥ १ ॥ २ ॥**

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिनाचिकेताः ॥ १ ॥ यः सेतुरीजानानामक्षरं ब्रह्म तत्परम्। अभयं तितीर्षतां पारं नाचिकेतँ शकेमसि ॥ २ ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु

वारुणी तथा । उमेति चार्थमानिन्यस्तिस्रो द्विव्द्येकदेवताः । मनोऽभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु । ते श्रेष्ठा अर्थमानिभ्यस्तेभ्यो बुद्धिस्सरस्वती । तस्या ब्रह्मा महानात्मा ततोऽव्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः । कश्चित्कुतश्चिच्छ्रेष्ठस्तु नास्तीति किमु सा कथा । तस्माद्वागात्मिका देवीरुमाद्यास्तु शिवादिषु । शिवादीन् ब्रह्मवाय्वोस्तु नियच्छेन्महदात्मनोः । तौ रमायां परानन्दे तां विष्णौ परमात्मनि । तद्वशत्वेन तद्ध्यानं नियमो नाम नापरः । कुतस्तु मानुषो देवान्नियच्छेद्विनियामकान्' इति च । स्वभार्यायाः परत्वं सिद्धमिति महतः परमित्येवोक्तम् ॥ १ ॥ ३ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीकाठकोपनिषद्भाष्ये प्रथमोऽध्यायः ॥ १ ॥**

---

गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥ यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥ यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति सँसारं चाधिगच्छति ॥ ७ ॥ यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥ विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ११ ॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुध्द्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥ यच्छेद्वाङ्मनसि प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति तदिच्छेच्छान्त आत्मनि ॥ १३ ॥ उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत । क्षुरस्य धारा निशिता दुरत्यया दुर्ग पथः तत्कवयो वदन्ति ॥ १४ ॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ १५ ॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तँसनातनम् । उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥ १६ ॥ य इदं परमं

तृणु कात्करण इति धातुः ॥ इदं गुह्यं ब्रह्म प्रवक्ष्यामि । यथा मरणं प्राप्य जीवो भवति तच्च प्रवक्ष्यामि जीवेश्वरभेदज्ञापनाय । यः कर्मफलभोक्तासुप्त्यादिमान्स जीवः । यः प्रलयादिषु जीवेषु सुप्तेषु जागर्ति स विष्णुः परं ब्रह्मेत्यर्थः । न हि जीवस्य योन्यादिगमनं ब्रह्म । जीवाद्भेदेन ज्ञातं हि ब्रह्म यथावज्ज्ञातं भवति । जीवस्यान्तिके । न हि स्वस्य स्वयं जीवोऽन्तिके भवति । वस्त्वन्तरस्य हि दूरत्वमन्तिकत्वं वा ।

'अम्नामभ्यश्च भूतेभ्यस्तपोनाम्नशिवादपि । पूर्वं यो जनयामास पूर्वाऽजातं चतुर्मुखम् । स्वात्मानं च गुहासंस्थं सर्वभूतैस्सहाऽभिभूः । यः पश्यति सदा विष्णुस्स एष हृदि संस्थित' इति च । यथा मुखादिन्द्रश्चाग्निश्चेत्यादिना जाता एवेन्द्रादयः कश्यपात्पुनर्जायन्ते न तथा भगवतो ब्रह्मा । किन्त्वजातमेवाऽद्भ्यः पूर्वमजायत जनयामास । अजायतेति जज्ञे बहुज्ञमितिवदन्तर्णीतणिच् ।

---

गुह्यंश्रावयेद् ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ॥ तदानन्त्याय कल्पत इति ॥ १७ ॥ **इति प्रथमाध्यायस्य तृतीया वल्ली ॥१॥३॥ इति काठकोपनिषदि प्रथमोऽध्यायः ॥१॥**

पराञ्चि खानि व्यतृणात्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥ पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥ येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥ ३ ॥ स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥ य इदं मध्वदं वेदात्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥ ५ ॥ यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ॥ गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यति । एतद्वै तत् ॥ ६ ॥ या प्राणेन संविशत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत् ॥ ७ ॥ अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः । दिवेदिव ईड्यो

'अदनाददितिर्विष्णुर्यः प्राणसहितः स्थितः । उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना । मत्स्यकूर्मादिरूपेण गुहासंस्थमजीजनत् । भूतैस्सह महाविष्णुः परमात्मा युगेयुगे' इति च । देवतामयी देवतोत्तमा । प्राणेन सहितो भवति । गुहां प्रविश्य तिष्ठन्तं स्वात्मानं भूतैस्सह विविधं जनयामास । 'सर्वज्ञो भगवान्विष्णुररण्योर्गुरुशिष्ययोः । सुभृतस्तूयते नित्यं जानद्भिः पुरुषोत्तम' इति च । अर्यते ण आभ्यामित्यरणी ।

'यः प्रादुर्भावगो विष्णुर्देहादिषु च संस्थितः । स एव मूलरूपश्च साक्षान्नारायणाभिधः । मूलरूपश्च यो विष्णुः प्रादुर्भावादिगश्च सः । गुणतस्स्वरूपतो वापि विशेषं योऽत्र पशयति । अत्यल्पमपि मृत्वा स तमोऽन्धं यात्यसंशयम् । भेदाभेदविदश्चात्र तमो यान्ति न संशयः । तथैवाऽवयवानां च गुणानां च परस्परम् । क्रियाणां तेन चैतेषां भेदविच्चोभयंविदः । यान्त्येवान्धं तमो नात्र कार्या काचिद्विचारणे' इति च ।

'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः । धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षित' इति शब्दनिर्णये । अतो नानेवेतीवशब्दोऽत्यल्पविषयो भेदाभेदविषयश्च । प्रथमं य इह नानेव पश्यतीति स्वरूपभेदनिषेधार्थम् । नेह नानास्ति किञ्चनेति किञ्चनशब्दादवयवानां गुणानां क्रियाणां च परस्परं तद्वता च भेदनिषेधार्थम् । भेदाभेद एव निषिध्यते न तु भेद इत्याशङ्कां निवारयितुमेवं धर्मान्पृथक्पशयन्निति भगवद्धर्माणामवयवगुणकर्मणां भेददर्शने पृथग्दोषमाह । पर्वतेषु दुर्गे शिखरे वृष्टमधो विधावति । एवं विष्णोश्च धर्मान्पृथक्पश्यन्नन्धन्तमो विधावति । विजानतो मुनेरात्मा वायुरपि तादृगेव भवति न तु स एव भवति । किम्वन्ये जीवाः । 'सर्वेषां ज्ञानिनामात्मा

---

जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत् ॥ ८ ॥ यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवास्सर्वे अर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥ ९ ॥ यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥ मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन । मृत्योस्स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥

देवानां च विशेषत: । मुक्तो वायुश्च सादृश्यमेव विष्णोस्तु गच्छति । न तु तद्रूपतां याति किम्वन्ये देवमानुषाः । आभासाभासरूपास्तु वायोर्देवस्य सर्वश' इति भविष्यत्पर्वणि **॥२॥१॥४॥**

इदं पुरं भगवदधीनमित्यधिष्ठायाजस्येदं पुरमिति स्थितं कृत्वा। 'विमुक्तो निरभीमानात्पूर्णमेवापरोक्षवित् । मुरव्यतो मुच्यते पश्चाद्दुःखाद्याभासहानत' इति च । 'नित्यहीनोऽखिलैर्दोषैस्सारारूपो यतो हरि: । हंस इत्युच्यते तस्माद्वायुस्थश्शुचिषत्स्मृत: । वरसुर्वसुरित्युक्तस्स एवाप्यन्तरिक्षग:। होता सर्वेन्द्रियादिस्थो वेद्यां पूज्यश्च वेदिषत् । अत्यन्नश्चातिथिः प्रोक्तो यस्मादन्नं थमुच्यते । स द्रोणकलशे सोमे स्थित उक्तो दुरोणसत् । नृषु स्थितश्च देवेषु वरेष्वपि स एव तु । ऋतरुपे तथा वेदे व्योमाख्यप्रकृतावपि । व्योतं जगदिदं यस्यां सा व्योम श्रीरुदाहृता । अब्जगोजाद्रिजेष्वेवमास्ते सोऽब्जादिकस्ततः । तथैवर्तेषु मुक्तेषु गतास्ते पिष्णुमित्यृताः । वेदैर्मुख्यतया प्रोक्त ऋतमित्येव चोच्यते । बृहत्पूर्णगुणत्वाच्च स एव पुरुषोत्तम: । न

---

अङ्गुष्ठमात्र: पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत् ॥ १२ ॥ अङ्गुष्ठमात्र: पुरुषो ज्योतिरिवाधूमक:। ईशानो भूतभव्यस्य स एवाद्य स उ श्व: । एतद्वै तत् ॥ १३ ॥ यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानु विधावति ॥१४॥ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥ **इति द्वितीयाध्यायस्य प्रथमा वल्ली ॥२॥१॥ (४)॥**

पुरमेकादशद्वारमजस्यावक्रचेतस: । अधिष्ठाय न शोचति विमुक्तश्च विमुच्यते। एतद्वै तत् ॥१॥ हँ्स: शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥२ ॥ ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासते ॥ ३ ॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिन: । देहाद्विमुच्यमानस्य किमत्र परिशिष्यते। एतद्वै तत् ॥४॥ न प्राणेन

केवलं प्राण एव चेतनानां विधारकः । किन्तु विष्णुं समाश्रित्य प्राणो जीवान्बिभर्त्ययम् । अतो मुख्याश्रयो विष्णुश्चेतनानां स्वतन्त्रतः । अग्निर्यथैको लोकेषु प्रविष्टोऽन्यो न विद्यते । पाकादिकर्ताऽथाप्यस्य देवस्य प्रतिरूपकाः । रूपं रूपं प्रति ह्येते सन्त्यचेतनवह्नयः। एवं देवो वायुरपि धारकोऽयो न विद्यते । रूपं रूपं तथाप्यस्य प्रत्यभूत्प्रतिरूपकः । अचेतनः स्पर्शगम्यो योऽयमेवं जनार्दनः । एकस्स्वतन्त्रो नान्योऽस्ति सर्वजीवान्तरस्थितः । रूपं रूपं प्रति ह्यस्य प्रतिबिम्बाश्च चेतनाः । बाह्याश्च ते ततो नास्य स्वरूपं ते कथञ्चन । अनादिप्रतिबिम्बाश्च बभूवुस्ते ह्यनन्तकाः । सूर्यो यथान्तरं चक्षुः प्रतिबिम्बोऽस्य बाह्यकम् । बाह्यचक्षुर्गतैर्दोषैरन्तश्चक्षुर्न लिप्यते । अन्तश्चक्षुर्देवता तु बाह्यं चक्षुरचेतनम्। एवं बाह्यस्वतन्त्रत्वाज्जीवेभ्यः पुरुषेत्तमः । अस्वतन्त्रस्य जीवस्य दुःखैर्नैव हि लिप्यते । चेतनाभासको जीवः परमश्चेतनो हरिः । स्वतन्त्रत्वात्स्वतन्त्रो हि नैव दोषेण लिप्यत' इति कौर्मे ।

स एक एव सर्वभूतान्तरात्मा । तस्य रूपं रूपं प्रतिरूपाख्यो जीवो बभूव । बहिश्चासौ परमात्मानो नितरां भिन्नः । परतन्त्रत्वात् । आत्मैवेदमग्र आसीदित्यादिवदनादित्वापेक्षया । 'आत्मनिस्थं हरिं जानन्मुच्यते नात्र संशयः । जीवैक्येन तु तं ध्यायंस्तमस्यन्धे पतेद्ध्रुवमि' ति च । एतदेव

---

नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥ हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् । यथा मरणं प्राप्यात्मा भवति गौतम ॥६॥ योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनसंयन्ति यथाकर्म यथाश्रुतम् ॥७॥ य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तदब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥८॥ अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥ वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥ सूर्यो यथा सर्वलोकस्य

भगवद्रूपं प्ररमं सुखम् । ज्ञानिसुखं तु तद्विप्लुण्मात्रम् । 'ब्रह्मादीनां तु मुक्तानां सुखं विष्णुसुखस्य तु । प्रतिबिम्बस्तु विप्लुट्को विष्णोरेव परं सुखम् । सम्यग्भाति न भातीति जानीयां तत्कथं न्वहम् । तत्प्रसादमृते दिव्यमनिर्देश्यं परं सुखमि'ति च महावाराहे **॥२॥२॥५॥**

'सर्वोच्चो भगवान्विष्णुर्मूलं भूमिवदस्यतु । जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽवमाः । वृक्षमूलं रमादेवी सोऽश्व आशुगतेर्हरिः । तव्द्याप्तत्वात्तदन्नत्वादश्वत्थोऽयं प्रकीर्तितः । प्रवाहतस्त्वनादिश्च मुख्यतस्त्वमृतो हरिः । मुख्यामृतस्स एवैको जगन्नित्यं प्रवाहतः । प्राणाख्ये तु हरौ सर्वमेजत्यस्माच्च निस्सृतम् । वज्रवद्भयदं चैव स्वधर्मस्यातिलङ्घने । जीवे

---

चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥ एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १३ ॥ तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति न भाति वा ॥ १४ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥ **इति द्वितीयाध्यायस्य द्वितीया वल्ली ॥२॥२॥(५)॥**

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥ १ ॥ यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥ भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥ इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः । ततः स्वर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥ यथाऽऽदर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके । यथाप्सु परीव दृश्यते तथा गन्धर्वलोके । छायातपयोरिव ब्रह्मलोके ॥ ५ ॥ इन्द्रियाणां

स्थितस्तु भगवान्दृश्यते ज्ञानदृष्टितः । आदर्शे मुखवत्सम्यङ्ग्न तथा पितृलोकगः । ततः किञ्चित्स्पष्टतया गान्धर्वे दृश्यते हरिः। नाऽत्यातपे न च्छायायां यथैवाहनि दृश्यते । स्पष्टं तथा ब्रह्मलोके दृश्यते पुरुषोत्तम' इति च । पुनरिन्द्रियेभ्यः परं मन इत्यादि देवतातारतम्यज्ञानपूर्वकं भगवतः सर्वोत्तमत्वज्ञान एव सर्ववाक्यानां महातात्पर्यमिति ज्ञापयितुम् । 'तारतम्यपरिज्ञानपूर्वकं सर्वतो हरेः । आधिक्ये सर्ववाक्यानां तात्पर्यं महदिष्यते' इति च ।

'प्रादुर्भावानृते विष्णुमिन्द्रियैर्नैव पश्यति । प्रादुर्भावानपियदा ज्ञानदृष्ट्यैव पश्यति । तदैव मुच्यते योगी न दुष्टैरिन्द्रियैः क्वचित्' इति च । प्रभवाप्ययौ प्रति हि योगः । भगवतस्सकाशात्प्रभवाप्ययौ । अधिकस्सतोऽयं भगवान्तसर्वस्मादपि केशवः । अस्तीति नामकस्तस्मात् ज्ञातव्यस्स तथैव च । अनाधिक्यं जानतां तु कथं स उपलभ्यते । प्रकृतेः पुरुषाणां च तत्त्वं भावयति स्फुटम् । तत्त्वभावस्ततो विष्णुस्तत्प्रसादात्तु तस्य हि । आधिक्यं ज्ञायते सत्तः प्रसादश्च तथाविदः। अनादिकालादाधिक्यं सर्वस्माज्जानतो हरेः । पुनःपुनर्वृद्धिमेति तज्ज्ञानं हि

---

पृथग्भावमुदयास्तमयौ च यत् । पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥ ६ ॥ इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमम् । सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥ ७ ॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । तं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥ न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चिदेनम् । हृदा मनीषी मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ ९ ॥ यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमांगतिम् ॥ १० ॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगा हि प्रभवाप्ययौ ॥ ११ ॥ नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥ अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः। अस्तीत्येवोपलब्धस्य नत्वभावः प्रसीदति ॥ १३ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य

भवेभवे । येषामाधिक्यविज्ञानं नैव पूर्वं हरेर्भवेत् । तेषां पश्चाच्च नैव स्यादभिभूतं तु तत्पुनः । व्यञ्जकाद्व्यक्तिमभ्येति तस्मात्तज्ज्ञानमुत्तमम्' इति च।

'अन्तःकरणकामानां त्यागो व्यक्तिश्चिदात्मनाम् । कामानां तु तदा मुक्तौ मृतिं नैवाभियास्यति । मिथ्याज्ञानग्रन्थिभिस्तु नितरां मुच्यते यदा । तदामृतत्वमेवैति तदर्थं चानुशासनम् । शरीरभूतो विष्णोस्तु जीवस्तद्वशगो यतः । अधिष्ठितश्च तेनैव विजानीयात्पृथक्ततः । स्वाख्याच्छरीराज्जीवात्तु प्रवृहेद्विष्णुमव्ययम्' इति च ।

'यस्यात्मा शरीरम्। य आत्मानमन्तरो यमयति' इति च । जनानां हृदय इत्युक्तत्वाच्चजीवात्पृथग्घरिरिति सिद्धम् । 'देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि । जीवस्य स तु विज्ञेयो जीवाद्भेदेन मुक्तये' इति च । संसारिशरीरेणाभेदो वादिना केनापि नाङ्गीकृतः । न च लोके सिद्धः ।

---

हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥ यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्योऽमृतो भवति एतावदनुशासनम् ॥ १५ ॥ शतं चैकाच हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति ॥ १६ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥ मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

**द्वितीयाध्यायस्य तृतीया वल्ली ॥ २ ॥ ३ ॥ (६) ॥**

**इति श्रीकाठकोपनिषत् सम्पूर्णा ॥**

जनानामितिभेदात् । नजीवोऽङ्गुष्ठमात्रः । अतो विष्णोर्जीवाद्भेद उक्तः अतस्सर्वोत्तमो विष्णुरिति सिद्धम् ॥ २ ॥ ३ ॥ ६ ॥

नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।
यस्याहमाप्त आप्तेभ्यो यो म आप्ततमस्सदा ॥ १ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीकाठकोपनिषद्भाष्ये द्वितीयोऽध्यायः ॥२॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**

***

॥ श्रीः ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# तैत्तिरीयोपनिषद्भाष्यम्

॥ ॐ ॥ सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीड्यं विष्णवाख्यं सर्वदैमि सुप्रेष्ठम् ॥ १ ॥

'आदित्यसंस्थिताद्विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् । तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः । विष्णुमस्तौत्तथा प्राह शन्नोमित्रादिका श्रुतिः । यदुवाच हरिः सूर्यमण्डलस्थः परः पुमान् । ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु । शन्नो मित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । भृगुः नन्नात्मकं पूर्णमन्नादिमयमच्युतम् । मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः । सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम्' इत्यादि यजुःसंहितायाम् । 'भृगुवाक्यतया वायुनमस्कारादिकं हरिः । प्रोवाच ब्रह्मणे चैवं वचः सुबहुदर्शिषु' इति च ।

---

## ॥ तैत्तिरीयोपनिषत् ॥

### ॥ १. शीक्षावल्ली ।

॥ॐ॥ ओं शन्नो मित्रः शं वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ओं शान्तिः शान्तिः शान्तिः ॥ १ ॥

वरणीयो वर्णः । स्वरतेस्तु स्वरः । मानात्त्राता मात्रा । बलरूपः समश्च सर्वरूपेषु । सन्ततश्च ।

'वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् । विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् । नारायणादिरूपाणि लोकादिषु च पञ्चसु । अनिरुद्धावसानानि ध्येयानि चतुरात्मना । वासुदेवादिकान्येव तानि पूर्वोत्तरार्णयोः । संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः । यो वेदैतानि रूपाणि सर्वभोगसमन्वितः । प्राप्नोति वैष्णवं स्थानं मुक्तः स्वर्गाभिधं परम् । यो विश्वरूपो भगवान्च्छन्दसामधिपो हरिः । छन्दोभ्योऽमृतरूपेभ्यः सुव्यक्तस्तदुपासनात् । मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते' इति च ।

---

ओं शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥ २ ॥ सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सँहिताया उपनिषदं व्यारव्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्य-मधिप्रजमध्यात्मम् । ता महासँहिता इत्याचक्षते ॥३॥ अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः वायुः सन्धानम् । इत्यधिलोकम् ॥ ४ ॥ अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिपम ॥ ५ ॥ अथाधिविद्यम् । आचार्यः पूर्वरूपम् अन्तेवास्युत्तररूपम् । विद्या सन्धिः प्रवचनँ सन्धानम् । इत्यधिविद्यम् ॥ ६ ॥ अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननँ सन्धानम् । इत्यधिप्रजम् ॥ ७ ॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासँहिताः य एवमेता महासँहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥ ८ ॥ यच्छन्दसामृषभो विश्वरूपः । छन्दोभ्योध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा

'वेदावासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः । भगः षड्गुणपूर्णत्वात् बहुरूपत्वतो विभुः । सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् । मुच्यते नात्र सन्देहः सर्वभोगैश्च पूज्यत' इति प्रक्लृप्ते ।

'आवहन्ती चिरं सर्वभोगान्या श्रीः सनातनी । तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम्' इति च ।

'भूरादि व्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम् । अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः । वासुदेवो महोनामा त्वनिरुद्धः शिरो मतः । भूर्नामाथ भुवोनामा बाहू प्रद्युम्न ईरितः । सङ्कर्षणः सुवर्नामा पादौ तस्य महात्मनः । अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते । निर्विशेषोऽपि भगवान्सङ्ख्यामात्रविशेषतः । लोकज्योतिः प्राणवेदेष्वेकः स पुरुषोत्तमः । प्रत्येकशश्चातुरात्म्यात्षोडशात्मा प्रकीर्तितः । महीयते महति च स्वयं स भगवान्हरिः । पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते । नामप्रवृत्तिहेतुत्वात् नामलोकादिकं हरेः । अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः ।

---

। कर्णाभ्यां भूरिविश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥९॥ आवहन्ति वितन्वाना कुर्वाणा चीरमात्मनः । वासाँसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ॥१०॥ आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मायन्तु ब्रह्मचारिणः स्वाहा । प्र मायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भगप्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा ॥ ११ ॥ यथापः प्रवतायन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरा यन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मां भाहि प्र मा पद्यस्व ॥ १२ ॥ भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ॥ १३ ॥ भूरिति वा अयं लोकः । भुव

ईक्षणादन्तरिक्षं चाथादित्यस्थोऽदितेः सुतः । अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् । चन्द्र आह्लादरूपत्वादृगर्च्यत्वा ज्जनार्दनः । यजुर्याज्यस्वरूपत्वात्साम चासौ समत्वतः । बृहत्त्वाद्ब्रह्म वेदानां समुदायेऽखिले स्थितः । तत्सम्बन्धाद्वेदराशिर्ब्रह्मशब्देन कीर्तितः । प्रकृष्टनयनात्प्राणोऽपानोऽवाङ्नयनाद्धरिः । विविधं नयनाद्व्यानः सोऽन्नं सर्वोपजीव्यतः । एवं षोडशरूपोऽसौ चतुरात्माव्यवस्थितः । महाचमसनामाऽसौ यस्मादतिचमत्कृतिः । माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः । एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः । स एव ब्रह्मवित्तस्मात्पूज्यते मुक्तिगोऽपि सन् । सर्वदेवैरतितरां यः सम्यक् षोडशात्मविदि'ति व्याहृतितत्त्वे ।

'तस्य भूरिति शिरः एकं शिरः एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठे द्वे प्रतिष्ठे द्वे एते अक्षरे' इत्यादि श्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनैतां प्रवेदयत इति विशेषः । 'भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः । सुवः सुबलरूपत्वान्महः पूर्णत्वतो विभुः । तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् । स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः । तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः । वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः । स एव सर्ववेदोक्तः सर्वविद्यासु चेश्वरः । प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः । इतिहासः पुराणं च पञ्चरात्रं च सर्वशः । सम्यग्व्याहरणाद्विष्णोः श्रुता व्याहृतयस्त्विवति । सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु । विशेषेणाहरन्तीमं विष्णुमित्यथवा स्मृता' इति व्याहृतिसारे ।

---

इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वा व सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि ।

मन्यैर्होमस्तस्य चतुर्गुणः ॥६७॥ विसर्जयित्वा नैवेद्यं मूलेन त्रिः समर्च्य च । धूपदीपौ पुनर्दत्वा पुनर्मूलेन पूर्ववत् ॥६८॥ अर्चयित्वा हरिं ध्यात्वा जपेदष्टोत्तरं शतम् । पुनर्ध्यायेद्धरिं सर्वं देवदेवेश्वरं प्रभुम् ॥६९॥ जपध्यानहुतार्चादीनेवं यः कुरुते सदा । धर्मार्थकाममोक्षाणां भाजनं स्यात्स एव हि ॥७०॥ सर्वोत्तमं हरिं ज्ञात्वा य एवं भक्तिपूर्वकम् । जपध्यानादिभिर्नित्यं पूजयेन्नास्य दुर्लभम् ॥७१॥ भक्तिं कृत्वान्यदेवेषु ब्रह्मरुद्रादिकेष्वपि । सर्वोत्कर्षमविज्ञाय विष्णोर्याति तमो ध्रुवम् ॥७२॥ न यज्ञा न च तीर्थानि नोपवासव्रतानि च । दैवतानि च सर्वाणि त्रातुं तं शक्नुयुः क्वचित् ॥७३॥ हरिर्हि सर्वदेवानां परमः पूर्णशक्तिमान् । स्वतन्त्रोऽन्ये तद्वशा हि सर्वेऽतः स जगद्गुरुः ॥७४॥ ब्रह्मादयश्च तद्भक्त्या भागिनो भोगमोक्षयोः । तस्माज्ज्ञेयश्च पूज्यश्च वन्द्यो ध्येयः सदा हरिः ॥७५॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे प्रथमोऽध्यायः ॥१॥**



॥ ॐ ॥ यस्य कस्यापि मन्त्रस्य न्यासः पञ्चाशदक्षरैः । वीर्यदः केऽभितो वक्रमक्षिकर्णेषु नासयोः ॥१॥ गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्मूर्ध्नि च वाचि च । दोःपत्सन्धिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः ॥२॥ तुन्दे च हृदि धातूनां सप्तके प्राणजीवयोः । सक्षकारान् न्यसेद्वर्णान्नृसिंहः क्षस्य देवता ॥३॥ जपे न्यासे च विहितः क्षोऽक्षराणां सदान्ततः । प्राणायामो रेचयित्वा पूरयित्वा च कुम्भके ॥४॥ तारैस्त्रिर्द्वादशावृत्तैर्व्येकद्वादशकेन वा । तत्तन्मन्त्रेण वा कार्यो गायत्र्या दशतारकैः ॥५॥ आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिम् । वाय्वग्निवारुणैर्बीजैर्ध्यात्वा तन्मण्डले हरिम् ॥६॥ एकपञ्चाशद्वर्णानां चतुर्विंशतिमूर्तयः । आत्माद्या वासुदेवाद्या विश्वाद्या मत्स्यकच्छपौ ॥७॥ कोलो नृसिंहः सबटुर्जामदग्न्यरघूद्वहौ । वासिष्ठयादवौ कृष्णावात्रेयो

बुद्धकल्किनौ ॥८॥ शिंशुमारश्चेति शतं कलाः कलशनामकाः। एताभिः सहितां मूलमूर्तिं कुम्भोदके सुधीः ॥९॥ पूर्वोक्तविधिनाऽभ्यर्च्य प्रतिमां शिष्यमेव वा। स्नापयेत्पूर्वमर्चायां जपोऽनूनः सहस्रतः ॥१०॥ मूलमन्त्रस्य चाङ्गानां न्यासः स्नानादनन्तरम्। प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत् ॥११॥ कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम्। योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ॥१२॥

उपसर्गेषु जातेषु दैवभूतात्महेतुषु। आयुषे वार्थं शान्त्यै वा श्रिये वा पुण्यवृद्धये ॥१३॥ योग्यतायै मन्त्रसिद्ध्यै विष्णोः प्रीत्यर्थमेव वा। जुहुयात्सहस्रमयुतं लक्षं कोटिमथापि वा ॥१४॥ पूर्ववत्संस्कृते वह्नौ ध्यात्वा देवं जनार्दनम्। कृत्वा त्रिमेखलं कुण्डं चतुर्विंशाङ्गुलोच्छ्रितम् ॥१५॥ तावत्खातं चतुष्कोणमुच्छ्रितं द्वादशैव वा। व्यङ्गुलं त्र्यङ्गुलं वापि चतुरङ्गुलमेव वा ॥१६॥ विस्तारो मेखलानां स्यादन्त्या वा चतुरङ्गला। चतुर्विंशाङ्गुला वा तद्विस्तरो द्वादशैव वा ॥१७॥ अश्वत्थपत्राकृतिः स्यान्मूलतो द्वादशाङ्गुला। योनिः खाते च विनता प्रविष्टा व्यङ्गुलं तथा ॥१८॥ तदात्मनि हरिं ध्यात्वा कुण्डे देवीं श्रियं तथा। विष्णुवीर्यात्मकं वह्निं निक्षिपेत्प्रणवेन तु ॥१९॥ कुर्यात्क्रियाः षोडश च व्याहृतीभिः पृथक्पृथक्। वह्नेस्तद्गहरेः प्रीतिं कुर्वन्द्रव्यैर्यजेत्ततः ॥२०॥ आज्येन वा पायसेन समिद्भिः क्षीरिणामथ। तिलैर्वा तण्डुलैर्वापि मधुरैस्त्रिभिरेव वा ॥२१॥ ब्रह्मवृक्षसमिद्भिर्वा समिद्भिर्वाऽमृतोद्भवैः। अमृतासमिधो ज्ञेयाः सर्वत्र चतुरङ्गुलाः ॥२२॥

एवमेव च दीक्षायामाज्येनैवाहुतिक्रिया। पूजा च कार्या विधिवत्पूर्वं सर्वहुतेष्वपि ॥२३॥ गुरुवे दक्षिणां दद्याल्लक्षे लक्षे शतं सुधीः। आत्मनैव कृते होमे शक्तितो गुरुदक्षिणा ॥२४॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे द्वितीयोऽध्यायः ॥२॥**



॥ॐ॥ प्रतिष्ठां कारयन् विष्णोः कुर्यात्सुप्रतिमां बुधः । लोहैर्वा शिलया दार्वा मृदा वापि यथाक्रमम् ॥१॥ षण्णवन्त्यङ्गुलां योग आसीनामथवा स्थितम्। शयानां वा मुमुक्षूणां व्याचक्षाणां निजां स्थितिम्॥२॥ मुखादूर्ध्वं व्द्यङ्गुलोच्चां नवाङ्गुललसन्मुखाम् । सुवृत्तत्र्यङ्गुलग्रीवामास्तनाच्च षडङ्गुलाम् ॥३॥ पञ्चादशाङ्गुलां नाभेरा सार्धदशकाङ्गुलाम् । वृषणादा मूलतश्च साधुव्द्यङ्गुलमायताम् ॥४॥ तावदा गुदतो दीर्घां चैत्यादष्टादशाङ्गुलाम्। तथा व्द्यङ्गुलचैत्यां च द्वाविंशज्जङ्घया युताम् ॥५॥ अरभ्य गुल्फमध्यं च सहार्ध चतुरङ्गुलाम् । षडङ्गुलोच्चप्रपदां सार्धत्र्यङ्गुलमेव च ॥६॥ प्रपदोच्चयुतामन्ते व्द्यङ्गुलप्रपदोच्छ्रयाम् । त्र्यङ्गुलव्द्यङ्गुलामर्धहीनमध्याङ्गुलामपि ॥७॥ त्रिपदाङ्गुलहीनान्यां ततस्तादृशतत्पराम् । पादोनोच्चाङ्गुष्ठनखां तदर्धतदनन्तराम् ॥८॥ क्रमशः पादहीनान्यां रक्त पादनखां शुभाम् ।

विस्तारः प्रपदस्यापि षडङ्गुल उदाहृतः ॥९॥ अङ्गुष्ठपरिणाहस्तु चतुरङ्गुल ईरितः । त्र्यङ्गुलस्तु तदन्यस्य व्रीह्यर्धोनाः क्रमात्पराः ॥१०॥ दशाङ्गुलं जङ्घमूलं मध्यं च त्र्यङ्गुलाधिकम् । सप्तादशाङ्गुलं तूर्ध्वं जानुरष्टादशाङ्गुलम् ॥११॥ ऊर्वन्तोऽपि तथा ज्ञेयो मध्यं द्विद्वादशाङ्गुलः । चतुरङ्गुलाधिकं मूलं गुह्यं सार्धचतुष्टयम्॥१२॥ सार्धत्रयं परीणाहाद्वृषणं चतुरङ्गुलम्। सप्ताङ्गुलं परीणाहाद्वृत्तं प्रोक्तं समस्तशः ॥१३॥ अष्टत्रिंशाङ्गुलः कट्याः परीणाह उदाहृतः । सुवृत्तत्वं तथा श्रोण्योः पीनत्वं च समस्तशः ॥१४॥ विस्तारश्च तथा कट्याः सुप्रतिष्ठितता पदोः । कठ्याश्चैवाङ्गुलाधिक्यं नाभेरध उदाहृतः ॥१५॥ नाभिः सार्धाङ्गुलश्चैव गम्भीरोर्धाङ्गुलोन्नतः । वृत्तः प्रदक्षिणश्चैव द्विचत्वारिंशदङ्गुलम् ॥१६॥

मध्यं स्तने परीणाहः षडङ्गुलमतोऽधिकः । एकोनविंशाङ्गुलं तदुरोविस्तारलक्षणम् ॥१७॥ पादोनमङ्गुलं चैव भुजाभ्यां सह सार्धकम् । अंसयोर्विस्तृतिश्चैव पृथगष्टाङ्गुला मता ॥१८॥ सप्ताङ्गुलोच्छ्रयः कक्षादुपरि स्कन्धयोर्मतः । अष्टत्रिंशाङ्गुलं चैव हस्तयोर्मानमुच्यते ॥ १९॥ अष्टादशाङ्गुलो

बाह्वोः परीणाह उदाहृतः । क्रमादूनं तदन्ते तु सार्धाष्टाङ्गुलमीरितम् ॥२०॥ साङ्गुलस्तु तलः सार्धनवाङ्गुल उदाहृतः । समं तदुभयं ज्ञेयं तथैव तलविस्तृतिः ॥२१॥ अर्धाङ्गुलोन्नता मध्यः द्वयोः सार्धाङ्गुलोन्नता । कनिष्ठिकायास्तस्यास्तु व्रीहिमात्राधिकः परः ॥२२॥ सार्धत्रयपरिणाहौ मध्यज्येष्ठावुदाहृतौ । अन्यौ व्रीहितदर्धोनावन्या सार्धद्वयाङ्गुला ॥ २३॥ पादोनान्तपरीणाहाः सर्वा ज्येष्ठां विना स्मृताः। वक्षोविस्तारसदृशः परीणाहो गलस्य च ॥२४॥ ललाटकुक्षि-कण्ठास्तु दीर्घरेखात्रयान्विताः । वृत्तो गलो बाहवश्च स्तनावङ्गुलयस्तथा ॥२५॥ रक्तास्तलनखाश्चैव नेत्रान्तोऽधर एव च । उत्तरोष्ठश्च जिह्वा च नखौ पादोनकाङ्गुलौ ॥२६॥ अर्धाङ्गुलौ तथा मध्यावन्येऽष्टांशक्रमोनकाः। नासिकाया अधस्ताच्च नासिका च रराटिका ॥२७॥ समा मानेन नासाया उच्चत्वेनैव मापने। अर्धाङ्गुलाधिकं सर्वमुखस्य तु भविष्यति ॥२८॥

चतुरङ्गुलं तथैवास्यं सार्धव्रीह्यधरं स्मृतम्। उत्तरं व्रीहि मात्रं तु तदूर्ध्वं चाधरोपमम् ॥२९॥ सार्धाङ्गुलमथ प्रोक्तमधरादध एव च । आस्य पार्श्वद्वयं प्रोक्तमाकर्णात्तु षडङ्गुलम् ॥३०॥ सप्ताङ्गुलं नासिकायाः पार्श्वमाकर्णतः स्मृतम् । सपादाङ्गुलमुच्चा च नासिका परिकीर्तिता ॥३१॥ अर्धाङ्गुले पुटे तस्या मध्यं च समुदाहृतम्। नासिका व्रीहिविस्तारा चक्षुषी चाङ्गुलित्रये ॥३२॥ अङ्गुलं चैव विस्तीर्णे फुल्लेऽर्धं च तदन्यथा । चतुरङ्गुलौ भ्रुवौ चैव तथार्धाङ्गुलविस्तृतौ ॥३३॥ असंहतौ च निबिडौ तथा पक्ष्म सुनीलकम् । कर्णौ च त्र्यङ्गुलौ सार्धद्वयविस्तारसंयुतौ ॥३४॥

सकुण्डलं तावदेव विवरं सम्प्रकीर्तितम् । तथा व्द्यङ्गुलविस्तारं लताभ्यां सह कथ्यते ॥३५॥ कर्णपूरयूतौ कर्णावुत्पलाभ्यां च संयुतौ। नीलालकसहस्रेण युक्तं तन्मुखपङ्कजम् ॥३६॥ ललाटं सुविशालं च तथा सार्धनवाङ्गुलम् । विस्तारो मूर्ध्नि वृत्तं च शिरश्छत्राकृति स्मृतम् ॥३७॥ दीर्घाश्च कुञ्चिताग्राश्च नीलाः केशा हरेर्मताः । मुखमानेन चैवोच्चं किरीटं केशवस्य हि ॥३८॥

कुण्डले मकराकारे वक्षश्चैव सकौस्तुभम् । सश्रीवत्सं दक्षिणतः पीनं तुङ्गमुदाहृतम् ।। ३९।। हारग्रैवेयसहितमुपवीतयुतं तथा । बाहवश्च सकेयूरकङ्कणांगदमुद्रिकाः ।।४०।। समध्यबन्धं मध्यं च नितम्बे पीतमम्बरम् । काञ्चीगुणश्च पदयोर्नूपुरे चातिसुस्वने ।।४१।। अङ्गुलीयानि च पदोः कृतिभिः साधु कारयेत् । सोत्तरीयं च चक्राद्यैरायुधैश्च समन्वितम् ।।४२।। अनुन्नतैरविलैर्दन्तैर्युक्तं च सुस्मितम् । समदृष्टियुतं कार्यं श्लक्ष्णं चैष मनोहरम् ।।४३।।

प्रतिमार्थं व्रजन्पञ्चध्वनिभिर्मङ्गलैर्युतः । गत्वा शुचिस्थलं चैव शिलां तत्र परीक्षयेत् ।।४४।। ध्वनिभेदेन विज्ञाय शिलां गर्भवतीं त्यजेत् । मूलमन्त्रं जपन्विष्णुं ध्यायंस्तिष्ठेदुपोषितः ।।४५।। वार्क्षीं चेद्यज्ञवृक्षस्य सारेणैव तु कारयेत् । बलिदानं च सङ्क्षेपविधानेनैव कथ्यते ।।४६।। अस्य सङ्क्षेपशास्त्रत्वान्न विस्तरविरोधिता । दत्वोपहारं हरये तद्भूतेभ्यो बलिं हरेत् ।।४७।। प्राच्येभ्यो विष्णुभूतेभ्य इत्याद्यखिलदिक्षु च । आदाय विष्णुभूतेभ्यो लोकपेभ्यस्तथा हरेः ।।४८।। अनुज्ञामुद्धरेद्वृक्षं शिलां च प्रतिमाकृते । प्रतिमां पिण्डिकां पीठं शिलाभिस्तु त्रिजातिभिः ।।४९।। स्वरस्थूलत्वभेदेन पुंस्त्र्याद्या जातितः शिलाः । पुंशिला प्रतिमार्थं तु स्त्रीशिला पीठक्लृप्तये ।।५०।।

वेदमङ्गलघोषेण वाद्यैश्च प्रतिमां हरेत् । प्रागुदक्प्रवणे देशे कुर्याद्देवालयं सुधीः ।।५१।। रामावृते दक्षिणतः पश्चाद्विर्यग्र एव वा । मध्ये वा ग्रामपुरयोर्विशाले सुशुचौ तथा ।।५२।। ऐशानीं दिशमेकां तु विनोदकविवर्जिते । जलाशयस्य मध्ये वा शिलावृक्षादिवर्जिते ।।५३।। श्मशानादिकदेशानां विदूरे सुमनोहरे । किष्कुद्वादशतोऽनूनं कुर्याद्देवालयस्थलम् ।।५४।। द्विगुणं चतुर्गुणं वापि शतकिष्कुप्रमाणकम् । कृत्वा भूशोधनं सम्यक्सार्धपुंमानतस्त्वधः ।।५५।। केशाङ्गारास्थिवल्मीकलोष्ठाश्मादिविवर्जिते । हरिं तत्रापि सम्पूज्य बलिं दत्वापि पूर्ववत् ।।५६।। मृद्दारुशैलैर्लोहैर्वा कुर्याद्देवालयं दृढम् ।

दीर्घस्थकलमास्तिस्रस्तिर्यगष्टवोदराः ।।५७।। अङ्गुल्या मध्यरेखायाः समा लक्षणतः स्मृताः । स्वाङ्गुल्या मध्यरेखा तु प्रतिमादिषु लक्षणम् ।।५८।। ह्रस्वमध्योच्चभेदेन तत्तन्मानं समस्तशः । प्रादेश हस्तपुरुषमानं सामान्यलक्षणम् ।।५९।।

प्रतिमाध्यर्धकं द्वारमूर्ध्वमर्धं च विस्तृतिः । प्रतिमार्धप्रमाणेन पीठस्योच्चत्वमिष्यते ।।६०।। उन्नतिः पिण्डिकायास्तु चतुरङ्गुलमानतः । त्र्यङ्गुलं द्व्यङ्गुलं वापि गृहान्तः प्रतिमासमम् ।।६१।। उच्चं पर्यक्च क्रमश उच्चत्वं मध्यतः स्मृतम् । तावदुच्चं बहिश्चैव यद्येकं शिखरं भवेत् ।।६२।। अर्धोच्चमथवापि स्यादधस्तात्प्रतिमोन्नतम् । ततो द्विगुणमानं वा सार्धप्रतिममेव वा ।।६३।। शिखरान्तरे तु प्रतिमामानं तद्गल उच्यते । तत्त्रिपादं तदर्धं वा तदध्यर्धमथापि वा ।।६४।। वर्तुलं पद्मसदृशं हस्तिपृष्ठसमं तथा । चतुरस्रं चाष्टकोणं विमानं परिकीर्तितम् ।।६५।। प्रतिमाया दशगुणं विंशद्गुणमथापि वा । वर्तुलं शिखरं त्वेकं किरीटाकृतिमद्भवेत् ।।६६।। सभयाऽपि समेतं वा पृथक्सभमथापि वा । द्विसभं त्रिसभं वापि सगोपुरमथापि वा ।।६७।। प्राकारवृत्तयुक्तं वा सप्तप्राकारमेव वा । समवृत्तं किष्कुमात्रं बहिर्वा चतुरश्रकम् ।।६८।। ततः परं किष्कुमात्रं सभाया अन्तरं यदि । ततस्तावत्तृतीयायाः सार्धमेव ह्युदाहृतम् ।।६९।। किष्कुत्रयं च शक्रादेः स्थानं तद्वृत्ततः स्मृतम् । ततस्तु मण्टपं कुर्यात्प्रतिष्ठायाः सुलक्षणम् ।।७०।।

पूजयेद्वास्तुपुरुषस्योपरिष्ठांस्तु सर्वदा । देवान्ब्रह्मादिकान्वास्तुर्वराहस्य हरेः सुतः ।।७१।। पातितो दैवतैर्भूमौ चतुरश्राकृतिः स्थितः । कृत्वाष्टकाष्ठकोष्ठानि मध्ये ब्रह्मा च तुष्टये ।।७२।। पूज्यो द्वये द्वये शक्रो यमो वरुण एव च । सोमश्च पूज्यः कोणेषु वह्न्याद्याः कोणदेवताः ।।७३।। पुनस्त्रयस्त्रये कामं धातारं सविधातृकम् । स्कन्दं च पूजयेत्कोणे सूर्यं चैव विनायकम् ।।७४।। कालं कुबेरं च बहिः प्रत्येकं दिक्षु पूजयेत् । हारं हरिं गभीरं च गाहनं गेहनं गुहम्

॥७५॥ भातमङ्गारकं चैव पूर्वस्यां दिशि पूजयेत् । दारुणं विदरिं दूतं प्रद्योतं द्योतनं दरिम् ॥७६॥ मृत्युं शनैश्वरं चैव दक्षिणस्यां प्रपूजयेत् । पुष्करं क्षरणं क्षारं विक्षणं क्षोभणं क्षरम् ॥७७॥ चार्वङ्गं भार्गवं चैव पश्चिमायां प्रपूजयेत् । चारं विचारं प्रचरं सञ्चारं चरणं चरम् ॥७८॥ बृहस्पतिं बुधं चैवाप्युत्तरस्यां प्रपूजयेत् । एवमेवविमानस्य कृतेः प्रागपि पूजयेत् ॥७९॥

सप्तपर्णमयं साधु कारयेन्मण्टपं ततः । सप्तहस्तं द्विषड्ढस्तमथवा द्विगुणं ततः ॥८०॥ चतुर्गुणं वा सम्यक्त्व चतुरश्रं सहाजिरम् । अन्यं च मण्टपं दीर्घं पञ्चहस्तं तु कारयेत् ॥८१॥ त्रिचतुष्कोष्ठकं तत्र मध्ये प्रागायतं शुभम् । कारयेन्मण्डलं साधु हस्तमात्रं तु विस्तृतम् ॥८२॥ तत्र द्वादशपात्राणि स्थापयेत्पालिकादिकम् । पालिकास्तु च तुर्विंशत्यङ्गुलोच्छ्रयसंयुताः ॥८३॥ अष्टादशाङ्गुलाश्चैव तथा पञ्चमुखा इति । द्वादशाङ्गुलकाश्चैव शरावाः पश्चिमानुगाः ॥८४॥

तत्र विष्णुं चतुर्मूर्तिं पूजयेद्भक्तितस्त्रिशः । सप्तधान्यानि तेष्वेव पूरयेदङ्कुरार्थतः ॥७५॥ तत्र नित्यं बलिं दद्याद्विष्णवे दशरात्रकम् । ब्रह्मशंकरगीर्वाणपितृगन्धर्वयक्षकैः ॥८६॥ भूतैश्च पायसेनैव तथा पद्माक्षतेन वा । अन्नापूपेन पुष्पान्नैरन्नलाजाक्षतैरपि ॥८७॥ सक्तुभिश्च क्रमेणैव देवांतान् पायसेन वा । तदैव प्रतिमायाश्च कारयेदधिवासनम् ॥८८॥ पञ्चगव्ये सप्तरात्रं क्षिप्त्वा पुरुषसूक्ततः । वेदांश्च चतुरः सम्यक्पारयेयुर्द्विजोत्तमाः ॥८९॥ प्राच्यादिद्वारगौ द्वौ द्वावेकैकं तु दशावराः । यथालब्धं यथावित्तमथवा विष्णुतत्पराः ॥९०॥ त्रयोदशाक्षकुण्डानि परितः कारयेद्बुधः । उक्तलक्षणयुक्तानि प्रधानं त्वग्निकोणके ॥९१॥ साक्षात्तु कोणगाद्धस्तमात्रमन्तरतः सुधीः । आज्याहुतिं तेषु कुर्यात्प्रत्येकं लक्षसङ्ख्यकम् ॥९२॥ प्रत्येकमयुतं वापि प्रधाने लक्षसङ्ख्यकम् । अर्धं तदर्धमथवा मूलमन्त्रेण मन्त्रवित् ॥९३॥ पञ्चविंशतितत्वार्थे प्रधाने जुहुयात्पुनः । प्रत्येकं तु सहस्रं वा प्रत्येकं शतमेव वा

॥९४॥ शतं पुरुषसूक्तेन गायत्र्या च सहस्रकम् । कृत्वा जलाधिवासं च पूर्वं वा पञ्चगव्यतः ॥९५॥ चक्राब्जं भद्रकं वापि मण्टपे मण्डलं शुभम् । पद्मं वृत्तत्रयं चक्रं राशयो वीथिका लताः ॥९६॥ शोभोपशोभिकाश्चापि चक्राब्जस्य तु लक्षणम् । चतुरश्रं विना चक्रं विशेषो भद्रके स्मृतः ॥९७॥

सहस्रमर्धं पादं वा कलशांस्तत्र पूजयेत् । शतं तदर्थं पादं वा वित्ताभावे निगद्यते ॥९८॥ क्वाथेन क्षीरवृक्षाणां तथा पञ्चामृतैरपि । पञ्चगव्येन शुद्धेन जलेन च पृथक्पृथक् ॥९९॥ पूरयेत्कलशान्मध्यं शुद्धोदेनैव पूरयेत् । ब्राह्मस्यैव चतुर्दिक्षु गन्धोदानां चतुष्टयम् ॥१००॥ चतुर्दले सिते पद्मचतुष्के मण्डले स्थिते । पूर्वादिक्रमयोगेन रसक्काथशुभोदकान् ॥१०१॥ गन्धांश्च स्थापयेत्पञ्चगव्यं शुद्धान्तरे न्यसेत् । पृथक् चतुर्दलं पद्मं रक्तं कृत्वाल्पकं सुधीः ॥१०२॥ पञ्चाशत्त्वे तु गन्धोदं सर्वमध्ये निधापयेत् । ब्राह्मस्य पुरतस्त्वेकं शार्वं संस्थापयेद् बृहत् ॥१०३॥ अष्टदिक्ष्वष्टपद्मेषु पञ्चकं पञ्चकं न्यसेत् । अनेन क्रमयोगेन कलशा अखिला अपि ॥१०४॥ तत्तद्रव्यमयास्तत्र तत्र स्थाप्यास्तु बाह्यतः । तदैवाङ्कुरपात्राणि परितस्तत्र विन्यसेत् ॥१०५॥ कुशोदकं च कार्पूरं कौङ्कुमं चान्दनं तथा । तुहिनोदं हरिद्रोदमौशीरं कौष्टसार्षपम् ॥१०६॥ नदीसङ्गमजं चैव ताटाकं कौप्यमेव च । निर्झरोदमिति प्रोक्ता विशेषकलशा इमे ॥१०७॥ शुद्धोदद्वयमप्येतन्महातीर्थसमुद्भवम् ॥

चतुर्विंशतिमूर्तीनां वर्णमूर्तीस्तथाऽपराः ॥१०८॥ आवाहयेच्छतत्वे तु क्रमव्युत्क्रमतस्तु ताः। वर्णमूर्तीः पुनश्चैव द्विचतुर्वारमेव वा ॥१०९॥ सहस्रकलशादित्वे जपेन्मन्त्रांश्च शक्तितः । ततस्तु पञ्चघोषैश्च वेदघोषैस्तथाऽऽदरात् ॥११०॥आनीय प्रतिमां स्नानं कारयेत्प्रणवेन तु । मन्त्रैः पुरुषसूक्तान्तैर्वितश्चक्षुषा तथा ॥१११॥ पुनश्चाष्टाक्षरेणैव प्रणवेनैव भक्तितः । स्नापयित्वा गन्धजलैर्गन्धपुष्पादिभिः पुनः ॥११२॥ अलङ्कृत्य स्थापयेत्तु प्रतिमां प्रणवेन तु

। जपेदष्टाक्षरं मन्त्रं तत्तन्मूर्तिमनुं तथा ॥११३॥ अष्टोत्तरशतं मन्त्री ध्यायेत्तेजोमयीं पुनः । प्रतिमां प्रतिमांतस्थां तन्मध्ये परमं वपुः ॥११४॥ चिदानन्दरसं सर्वगुणसम्पूर्णमुत्तमम् । पञ्चविंशतितत्त्वानां देवतास्तदनन्तरम् ॥११५॥ स्थापयेत्प्रतिमामध्ये परितः केशवस्य तु । तत्रात्वाहार्षसूक्तं च घर्मसूक्तं च वैष्णवम् ॥११६॥ सूक्तं च विश्वकर्मीयं पौरुषं सूक्तमेव च । जप्त्वा चैव निजं मन्त्रं पुनरष्टाक्षरं सुधीः ॥११७॥ प्रणवं च जपेद्विष्णुं ध्यायन्नुत्तमरूपिणम् । ततस्तु कलशैर्बाह्यक्रमेणैव जनार्दनम् ॥११८॥ स्नापयेदुक्तमन्त्रैस्तु मध्यमं प्रणवेन तु । अष्टार्णेन निजेनापि तथा पुरुषसूक्ततः ॥११९॥ आवाहनं च स्नपनं पञ्चगव्येन मध्यवत् । पूर्वाद्युत्तरपर्यन्तः कलशक्रम उच्यते ॥१२०॥ जप्त्वा पुनश्च तन्मन्त्रान्पूजयैच्च विधानतः । द्वारलोकपतिभ्यश्च बलिं दत्वा यथाक्रमम् ॥१२१॥

वस्त्ररत्नहिरण्याद्यैरलङ्कृत्य विभूतितः । गुरवे दक्षिणं दद्यात्कोटिं लक्षं सहस्रकम् ॥१२२॥ शतमर्धं तदर्धं वा निःस्वो भक्त्या क्षमापयेत् । तदर्धमृत्विजां चैव तदर्धं पारणाकृताम् ॥१२३॥ आ श्वभ्य आ श्वपाकेभ्यो दद्यादन्नं समस्तशः । पुरस्तात्परतश्चैव सप्तरात्रं निरन्तरम् ॥१२४॥ सुवर्णवस्त्ररत्नाद्यैरागताभ्यागतानपि । पूजयेच्छक्तितो भक्त्या प्रीयतां भगवानिति ॥१२५॥ गीतनृत्तैश्च वाद्यैश्च पुराणैरितिहासकैः । सूक्तैर्मङ्गलघोषैश्च वैदिकैर्दिनसप्तकम् ॥१२६॥ नयेत्ततो महाराजविभूत्याऽवभृथं सुधीः । कारयेद्देवदेवस्य स्वाध्यायैर्गीतनृत्तकैः ॥१२७॥ महानदीसङ्गमे तु तीर्थे चातिप्रशस्तके । स्नापयेत्पूर्ववन्मन्त्रैः पुंसूक्तान्तैः स्मरन्हरिम् ॥१२८॥ ततः पूर्ववदागत्य प्रवेश्य पुरुषोत्तमम् । पूजयित्वा विधानेन दत्वा दानानि शक्तितः ॥१२९॥ गुरुं च भक्त्या सम्पूज्य स्वीकुर्यादाशिषस्ततः । शतप्रस्थादनूनं तु नैवेद्यं पायसोत्तरम् ॥१३०॥ दिनेष्वेतेषु दातव्यं सघृतं ससितादिकम् । पश्चादपि यथाशक्ति पूजा कार्या हरेः सदा ॥१३१॥

जीर्णालयोद्धृतौ चैव तत्त्वमन्त्रान्स्वकं तथा । प्रातिलोम्येन जप्त्वैव मूर्तौ सङ्कोचयेद्धरिम् ॥१३२॥ उक्तेनैव विधानेन तदर्धैर्विभवैः सुधीः । पादमात्रैरपि

हरिं स्नापयित्वा यथोदितम् ॥१३३॥ एतेनैव विधानेन कृत्वा देवालयं पुनः । स्थापयेत्पुण्डरीकाक्षं द्विगुणेन प्रवाहणात् ॥१३४॥ विभवेनानुलोम्ये(मे)न जपन्मन्त्रान्पुनस्तथा । आराधयेज्जगन्नाथं ध्यायन्भक्त्या यथोदितम् ॥१३५॥ यात्रापि पूर्ववत्तत्राप्युत्सवेषु च सर्वशः । कलशोक्तविधानेन पूजा बलिहृतिस्तथा ॥१३६॥ उत्सवेषु सदा कार्या कलषश्चोत्सवादनु । यात्रास्नानं च कर्तव्यं सम्यगुक्तविधानतः ॥१३७॥ चोरचाण्डलपतितश्वोदक्यादिप्रवेशने । शवाद्युपहतौ चैव पूजाविच्छेदने तथा ॥१३८॥ स्नापनोक्तेन मार्गेण प्रायश्चित्तकृतिः स्मृता । सर्वत्र विष्णुगायत्र्या होमः स्यादयुतावरः ॥१३९॥ नावाव्याद्यभिधानानि विद्महे धीमहे तथा । प्रचोदयात्तृतीयाधस्तन्नो गायत्रिनामिका ॥१४०॥ दुर्गाशिवस्कन्दसूर्यविनायकमुखानपि । स्थापयेदुक्तमार्गेण तत्तन्मन्त्रैः स्मरन्हरिम् ॥१४१॥ गोलकद्वितयं विष्णोस्त्रितयं वा प्रकीर्तितम् । अन्यदेवप्रतिष्ठासु तदन्तश्चिन्तयेद्धरिम् ॥१४२॥ विष्णुस्मृतिविहीना तु पूजा स्यादासुरी सदा । गृह्णन्ति देवता नैतां ततःस्याद्देशविल्पवः ॥१४३॥ व्याधिचोरादिभिस्तस्मादन्तर्ध्येयो हरिः सदा । विष्णुभक्तिविहीनस्य गतिः स्यान्न शुभा क्वचित् ॥१४४॥ भक्तस्याप्यन्यदेवेषु तस्माद्धचेयो हरिः सदा । संस्मृतो भगवान्विष्णुः सर्वमङ्गलमङ्गलः ॥१४५॥ समस्ताभीष्टदायी स्यात्तेन ध्येयोऽखिलैर्जनैः ॥

पुरुषोऽव्यक्तं च महानहङ्कारो मनस्तथा ॥१४६॥ दशेन्द्रियाणि शब्दाद्या भूतेताः पञ्चविंशतिः । तत्त्वाख्या कालमाये च नियतिर्मतिरेव च ॥१४७॥ विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्त्वसङ्ग्रहः । स्फूर्तिः संवित्प्रतिष्ठा च शक्तिरित्यपराणि तु ॥१४८॥ महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः । विष्णोरपि स्वरूपाणि तन्नाम्नैकादशैव तु ॥१४९॥ प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः । कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति ॥१५०॥ सर्वाण्येतानि तत्त्वानि ब्रह्मा तु पुरुषः स्मृतः । महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सम्प्रकीर्तिता ॥१५१॥ एवं वायुरपि ज्ञेयो भारती चैव तत्त्रयम् । रुद्रोऽहङ्कार उद्दिष्टः स्कन्देन्द्रौ मन उच्यते

।।१५२।। अहङ्कारः शेषवीन्द्रावपि विद्वद्भिरीरितौ । दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ।।१५३।। वह्निदक्षाविन्द्रसूनुर्मित्रश्चैव मनुस्तथा। इन्द्रियाख्याः शब्दनामा बृहस्पतिरुदाहृतः ।।१५४।।

अन्ये तु सूनवो वायो रूद्रस्यापि प्रकीर्तिताः । एतेषु भगवान्विष्णुः प्रधानतनुरेव तु ।।१५५।। ध्येयः परात्मनोर्मध्ये तत्त्वनामा(म) तदर्थयोः । जपे न्यासे नमोंऽतश्च स्वाहान्तो होमकर्मणि ।।१५६।। त्रिचतुष्षट्दशावृत्तिरेतेषां तु हुतादिके । न्यासोऽङ्गुलीषूरुबाहुमध्येषु व्युत्क्रमे स्मृतः ।।१५७।। क्रमे विपर्यणात्र शक्त्यादित्वं प्रकीर्तितम् । ऋषिच्छन्दोदेवताङ्गध्यानानुक्तौ प्रधानवत् ।।१५८।। ज्ञेया मन्त्राः समस्तास्ते पृथङ्गोक्षादिदायकाः । तन्त्रमार्गास्तु हरिणा ह्यसङ्ख्याः कीर्तिता अपि ।।१५९।। तेष्वयं सुगमो मार्गः सफलश्चानुतिष्ठताम् । यावतो ह्यननुष्ठाने कर्मपूर्तिर्न विद्यते ।।१६०।। तावत्समस्तं कथितमस्मिंस्तन्त्रे यथाविधि । प्रीयतेऽनेन मार्गेण पूजितो मुक्तिदो भवेत् ।। १६१।। कामदश्च स्वभक्तानां भगवान्पुरुषोत्तमः ।।१६२।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे तृतीयोऽध्यायः ।।३।।**



।।ॐ।। अथ विष्णूदिते तन्त्रसारे मन्त्रगणो हि यः । उदितः सङ्ग्रहेणासावुच्यतेऽखिलसाधकः ।।१।। याष्टमस्तूयतोऽन्तेन समेतश्चैव भूभृतः । बीजं नमश्च भगवान् सोद्देश्यो रूपसंयुतः ।।२।। स एव तादृशो लोकत्रयपालो भुवःपतेः । भावं मे देहि दान्ते तु दापाय स्वाहया युतः ।।३।। मनुस्तस्यापरस्तारबीजोद्देशनमोयुतः । नमः सोद्देशभगवान्महाशब्दयुतश्च सः ।

तादृशः स्वाहया युक्तो वराहस्यापरो मनुः ॥४॥ श्यामः सुदर्शनदराभयसद्वरेतो भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च। ध्येयो निजैश्च तनुभिः सकलैरुपेतः कोलो हरिः सकलवाञ्छितसिद्धयेऽजः ॥५॥ वैष्णवानां मुनिर्ब्रह्मा मन्त्राणां वर्णभेदतः। ज्ञेयं छन्दो देवतैकं तत्तद्रूपो हरिः परः ॥६॥ प्रणवेन स्वनाम्ना च भूधरेण परात्मना। सर्वज्ञसर्वशक्तिभ्यां षडङ्गानि विदो विदुः ॥७॥ ज्ञानैश्वर्यप्रभानन्द-तेजःशक्तिभिरेव वा(च)। पूर्णात्ममध्यगैः सर्ववैष्णवाङ्गान्यथो विदुः ॥८॥

तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः ॥९॥ श्रीकरोऽष्टाक्षरो मन्त्रो गरुडारूढसंस्मृतिः। द्विर्भीषय त्रासय च प्रमर्दय तथैव च ॥१०॥ प्रध्वंसयाथो रक्षेति पञ्चाङ्गश्चेदुदाहृतः ॥

क्रूरं वीरं बृहद्विष्णुं दीप्यन्तं विश्वतो मुखम् ॥११॥ पुंमृगेन्द्रं भयकरं शुभं मृत्याश्च मारकम्। नमामि स्वयमित्येष द्वात्रिंशार्णो मनुर्हरेः ॥१२॥

द्विर्जयस्योपरि निजं सोद्देशं सर्ववित्तथा। महातेजो बलं वीर्यं तादृशं स्वाहया युतम् ॥१३॥ चतुर्विंशाक्षरो मन्त्रो निखिलेष्टप्रदायकः। विद्महे धीमहे पूर्वं स्वयं चैव महाबलः ॥१४॥ प्रेरयेत्तन्न इत्येतन्मध्येऽनन्तः प्रकीर्तितः। पादैर्व्यस्तैः समस्तैश्च पदैश्चाङ्गं प्रकीर्तितम् ॥१५॥ पूर्वयोस्तत्र पूर्वं तु सर्वज्ञेन षडङ्गकम्। तृतीयं तु द्विरावृत्तैः पादैरङ्गसमन्वितम् ॥१६॥ ध्यायेन्नृसिंहमुरुवृत्त-रवित्रिनेत्रं जानुप्रसक्तकरयुग्ममथापराभ्याम्। चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोटच्यधिकतेजसमग्र्यशक्तिम् ॥१७॥ सर्वेष्वपि हि मन्त्रेषु व्याद्यनन्तान्तबाहुकः। चेतनान्तस्थमारभ्य सर्वगान्तस्थ(स्व)रूपवान् ॥१८॥ अनन्तरूपो ध्येयोऽत्र स्वगुरुक्तानुसारतः। यथायोग्यं यथाशक्ति तत्तदायुधभूषणः ॥१९॥ शङ्खचक्रगदापद्मखड्गखेटाः सशार्ङ्गकाः। शरो मुसलवज्रो च हलः पाशाङ्कुशौ तथा ॥२०॥ शूलं च भिण्डिबालश्च पट्टिशोऽग्निर्वराभये। तर्कमुद्राक्षमाला च पुस्तकं च विदारणम् ॥२१॥ इत्यादीन्यखिलान्येव विष्णोश्चिन्त्यानि बाहुषु ॥

वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः ॥२२॥ स सर्गहीनो वेतश्च

बिन्दुहीनोत्तरस्तथा। त्रय एते महामन्त्राः पुरुषार्थचतुष्टये ॥२३॥ कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः। तैरेव तु द्विरावृत्तैरङ्गमेषां प्रकीर्तितम् ॥२४॥ श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः । एकविंशत्सहस्रात्मा सषट्-शतमहर्निशम् ॥२५॥ अर्पणीयो हरौ नित्यं प्रातर्योगो महानयम् । अशेषदोषदहनस्तत्त्वज्ञानप्रदायकः ॥२६॥ अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासताम् । तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते ॥२७॥ ध्यायेद्रवीन्दुकरमिन्दुसहस्र-लक्षकान्तिं प्रियासहितमास्थितमिन्दुबिम्बे । शङ्खारिदोर्द्वयमुदर्कमहेन्दु-बिम्बात्संसिच्यमानममृतेन रमाधिनाथम् ॥२८॥ अन्त्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः। विद्युद्वर्णोऽथवा ध्येयः शक्त्येतः पञ्चमन्त्रयुक् ॥२९॥ अष्टाक्षरो महामन्त्रस्तैरेवाङ्गैः समन्वितः। अन्त्य ध्यानयुतश्चैव निःशेषपुरुषार्थदः ॥३०॥

मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि । विष्णुर्भोज्याधिपः स्वहा युक्तोऽष्टादशवर्णकः ॥३१॥ अङ्गानि तत्पदैरेव मन्त्रचिन्तामणिस्त्वयम् । यथेष्टभक्ष्यभोज्यादिदाता मुक्तिप्रदायकः ॥३२॥ ध्यायेत्सुशुक्लमरविन्ददलायताक्षं सौवर्णपात्रदधिभोज्यमथामृतं च । दोर्भ्यां दधानमखिलैश्च सुरैः समेतं शीतांशुमण्डलगतं रमया समेतम् ॥३३॥

अमृतं स्वयमुद्देशयुक्तः सहृदयो मनुः। सतारोऽष्टाक्षरोऽङ्गानिपदैर्व्यस्तैः समस्तकैः ॥३४॥ उद्याद्रविप्रभमरीन्द्रदरौ गदां च ज्ञानं च बिभ्रतमजं प्रियया समेतम्। विश्वावकाशमभितः प्रतिभासयन्तं भासा स्वया स्मरत विष्णुमजादिवन्द्यम् ॥३५॥

त्रिविक्रमस्तु सोद्देशो विश्वरूपश्च तत्परः। धीविदौ च महे विष्णुस्तन्नः प्रेरणमध्यगः ॥३६॥

स्वयमुद्देशसंयुक्तस्तदाद्यर्णपुरः सरः। सनतिः षडक्षरो मन्त्रो वर्णैरङ्गक्रिया मता ॥३७॥ अङ्गारवर्णमभितोऽण्डबहिः प्रभाभिर्व्याप्तं परश्वधधनुर्धरमेकवीरम्। ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयन्तम् ॥३८॥ श्यामं

रवीन्द्वमितदीधितिकान्तियुक्तं ज्ञानं शरं दधतं प्रियया समेतम्। स्वात्मस्वरूपममितं हनुमन्मुखेषु सन्दर्शयन्तमजितं स्मरतोरुगीर्भिः ॥३९॥

निजगोत्रं तु सोद्देशं पूर्वाक्षरपुरःसरम्। नत्यन्तं तारपूर्वं च मनुरष्टाक्षरो मतः ॥४०॥ ते च बीजे बीजभूते धर्मादीनामशेषतः। एते विजयदा मन्त्रा ज्ञानमोक्षप्रदायकाः ॥४१॥ हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः ॥

कृष्णो गोविच्च कामेतः सोद्देशो वल्लबीजनः ॥४२॥ प्रियश्चतादृशः स्वाहायुगष्टादशवर्णकः। पदैरङ्गानि सम्प्रीतिकाममोक्षप्रदोमनुः ॥४३॥ ध्यायेद्धरिन्मणिनिभं जगदेकवन्द्यं सौन्दर्यसारमरिशङ्खवराभयानि। दोर्भिर्दधानमजितं सरसं च भैष्मीसत्यासमेतमखिलप्रदमिन्दिरेशम् ॥४४॥

सकामः स्वयमुद्देशी नत्यन्तोऽयं षडक्षरः। तदादिरपि सर्वेष्टचिन्तामणिरुदाहृतः ॥४५॥ दृष्टार्थ एव मन्त्राणां कलौ वीर्यं तिरस्कृतम्। तत्राप्युद्दीप्तवीर्या हि मन्त्रा अत्र प्रकीर्तिताः ॥४६॥ वासिष्ठवृष्णिप्रवरमन्त्रास्तत्रापि वीर्यदाः ॥

स्वयं वेदपदारूढः पूर्ववर्णपुरः सरः ॥४७॥ नत्यन्तोऽष्टाक्षरोमन्त्रः प्रियो विज्ञानगोपतेः। व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः ॥४७॥ वादे विजयदो नित्यं यथा युद्धे नृकेसरी ॥४९॥ विज्ञानरोचिः पूरिपूरितान्तर्बाह्याण्डकोशं हरितोपलाभम्। तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोऽस्मि ॥५०॥

ज्ञानानन्दपुरःपूर्णो विद्महे धीमहे तथा। तन्नः प्रेरणमध्ये तु व्यासो मन्त्राधिपाधिपः ॥५१॥

आदिबीजं स्थिरादोषज्ञानबीजं विमुक्तिदम्। सर्वपापक्षयकरं सर्वव्याधिविनाशनम् ॥५२॥ ध्यायेच्छशाङ्कशतकोटयतिसौख्यकान्तिं संसिच्यमानममृतोरुघटैः सुरेशैः। वर्णाभिमानिभिरजेशमुखैः सहैव पञ्चाशता प्रतिगिरन्तमशेषविद्याः ॥५३॥

सोद्देशस्तु स्वयं दीर्घपूर्वार्णाद्यो नमोयुतः। सर्वविद्याप्रदोऽष्टार्णः

प्रतिवादिजयप्रदः। विमुक्तिसाधनः कीर्तिबुद्धिस्थैर्यप्रदः सदा ॥५४॥ वन्दे तुरङ्गवदनं शशिबिम्बसंस्थं चन्द्रावदातममृतात्मकरैः समन्तात्। अण्डान्तरं बहिरपि प्रतिभासयन्तं शङ्खाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥५५॥ नस्तो मुखादपि निरन्तरमुद्गिरन्तं विद्या अशेषत उताब्जभवेशमुख्यैः। संसेव्यमानमतिभक्तिभरावनम्रैर्लक्ष्म्याऽमृतेन सततं परिषिच्यमानम् ॥५६॥

स्वयमुद्देशवान्पूर्ववर्णपूर्वो नमोयुतः। सतारोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ॥५७॥ प्रोद्यद्दिवाकरसमानतनुं सहस्रसूर्योरुदीधितिभिराप्तसमस्तलोकम् । ज्ञानाभयाङ्कितकरं कपिलं च दत्तं ध्यायेदजादिसमितिं प्रतिबोधयन्तम् ॥५८॥ अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ॥

सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति प्रभोः ॥५९॥ सर्वार्थदं गार्त्समदं योजात इति चापरम्। वासिष्ठं च परो मात्रयेति ज्ञानविमुक्तिदम् ॥६०॥ भौवनीयं सर्वकाममोक्षदं य इमेत्यपि। एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः ॥६१॥

स्वदृष्टं सूक्तमखिलकामदं हरितुष्टिदम् । वाचोम्भ्रि(म्भृ)ण्याः श्रियोऽङ्गानि श्रीर्लक्ष्मीर्मन्दिरा रमा ॥६२॥ कौशेयपीतवसनामरविन्दनेत्रां पद्मद्वयाभय-वरोद्यतपद्महस्ताम् । उद्यच्छतार्कसदृशीं परमाङ्कसंस्थां ध्यायेद्विधीशनुतपादयुगां जनित्रीम् ॥६३॥

लज्जाबीजं च तद्बीजं तस्या एवाभिधायकम्। पाशाङ्कुशौ रक्तवस्त्रे लज्जाबीजे विशिष्यते ॥६४॥ अमध्ययुग्मस्वरगं तेनैवाङ्गमुदाहृतम्। सत्ताबीजं च दुर्बीजं तद्वदेव प्रकीर्तितम् ॥६५॥ वर्णः श्यामो विशेषोऽत्र ताम्बूलं नीलमुत्पलम्। चक्रशङ्खौ तर्जनं च शूलमित्यपरत्र च ॥६६॥ नमोऽन्तः स्वेनसहितस्तदेवान्यो मनुः स्मृतः। दुर्गा त्रिष्टुप् कश्यपोक्ता तत्रवर्णोऽग्निवत्स्मृतः ॥६७॥ त्रिनेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते। पादैः समस्तेन तथा षड्वर्णेनाङ्गमुच्यते ॥६८॥

रमाय एव रूपाणि त्वेतानि हि विदो विदुः । मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः ॥६९॥

हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितम् । ब्रह्मधातृविरिञ्चाजपाद्यैरङ्गमुदाहृतम् ॥७०॥ ध्यायेन्निषण्णमजमच्युतनाभिपद्मे प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यम् । मातृप्रकारकरमुत्तमकान्तिमद्भिर्वक्त्रैः सृजन्तमखिलै परमार्थविद्याः ॥७१॥ स्वयमुद्देशनतिमांस्तस्य पञ्चाक्षरो मनुः । स्वयमेवापरोऽष्टार्णस्तादृशः सम्प्रकीर्तितः ॥७२॥

बळाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते । प्राणाद्यैः पञ्चभिस्तस्याप्यङ्गान्युक्तानि सूरिभिः ॥७३॥ उद्यद्रविप्रकरसन्निभमच्युताङ्के स्वासीनमस्य नुतिनित्यवचः प्रवृत्तिम् । ध्यायेद्गदाभयकरं सुकृताञ्जलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् ॥७४॥ प्राणाद्याः पञ्चमन्त्राश्च तस्या देवस्य वाचकाः । उच्यते हरिरप्येतैः साक्षान्नारायणादिकः ॥७५॥

ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ । मन्त्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ ॥७६॥ उद्यद्दिवाकरसमूहनिभां स्वभर्तुरङ्कस्थितामभयसद्वरबाहुयुग्माम् । मुद्रां च तत्त्वदृशये वरपुस्तकं च दोर्युग्मकेन दधतीं स्मरतात्मविद्याम् ॥७७॥ पादैर्व्यस्तैः समस्तैश्च तदङ्गानि विदो विदुः । स्वयमुद्देशनत्यन्तौ मन्त्रौ द्वावपरौ तयोः ॥७८॥

मन्त्रा एते हरेः प्रीतिदायकाः सर्वकामदाः । इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता ॥७९॥ गुरुर्ब्रह्माऽथ वायुर्वा विद्यादेव्यौ प्रकीर्तिते । तस्मादेते प्रिया विष्णोरन्तरङ्गतया सदा ॥८०॥ ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता ॥

उद्देशनतियुङ्मन्त्रः स्वयमेव शिवस्य तु ॥८१॥ वर्णैरेतैस्तदङ्गानि वामदेवो मुनिः स्मृतः । पङ्क्तिशब्दार्थविज्ञाने नहि छन्दसि संशयः ॥८२॥ ध्येयः पञ्चमुखो

रुद्रः स्फटिकामलकान्तिमान् । विद्युच्छुभ्रासितरजःश्यामान्यस्य मुखानि च ॥८३॥ जटावबद्धेन्दुकलः प्रियायुङ्नागभूषणः। मन्त्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः ॥८४॥ अन्तर्यामितया ध्येयः सर्वदेवेषु सर्वदा ॥

स एव वनितालिङ्गः पार्वत्या मनुरुच्यते ॥८५॥ गौरीवराभयकरा ध्येया पीताम्बरा च सा ॥

स्वयमुद्देशनत्यन्तः पूर्वपूर्वः षडक्षरः ॥८६॥ सनत्कुमारदृष्टोऽयं मन्त्रः शेषस्य कामदः । दधानो हलसौनन्दौ श्वेतवर्णः कृताञ्जलिः ॥८७॥ सहस्रमूर्धाऽद्वितीयकर्णभूषः प्रियायुतः। वनमाली नीलवास ध्येयो विष्णोस्तु पृष्ठतः ॥८८॥

व्यत्यस्तपक्षितारौ च स्वाहान्तो गारुडो मनुः । कश्यपोऽस्य मुनिर्ध्येयः सुधापूर्णं हिरण्मयम् ॥८९॥ दधानः कुम्भमभयं पीतः शुक्लोऽरुणो हरिः । कृष्णश्चाजानुतो नाभेः कण्ठात्कादन्तः एव च ॥९०॥ प्रियायुक्पुरतो विष्णोः पक्षतुण्डसमन्वितः। जङ्गमस्थावरविषहृदयं सर्वकामदः ॥९१॥ मन्त्राश्च लोकपालानां नमोऽन्ताः सर्वकामदाः । पीतरक्तासितश्वेतशुक्लरक्ताश्च वर्णतः ॥९२॥ सप्रियाः साभया वज्रशक्तिदण्डासिपाशिनः । गदाकुमुदशूलर्ष्टिखङ्गिनो भूषणोज्ज्वलाः ॥९३॥

अग्निश्च स्वयमुद्देशी सनमः स्कन्दवाचकः । कौशिकोऽस्य मुनिर्वह्निवर्णः षण्मुख उज्ज्वलः ॥९४॥ धनुःशक्तिधरो ध्येयः कामदो भयनाशनः ॥

ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा ॥९५॥ सतारोऽष्टाक्षरः सौरः क्रमव्युत्क्रमतः पदैः । अङ्गानि पद्मयुगलधरो ध्येयोऽरुणो रविः ॥९६॥ सर्वव्याधिहरः श्रीदो बृष्टिदोऽयं मनुःस्मृतः । मोनयदासाप्रप्रक्षि व्यत्यस्तो विघ्नराण्मनुः ॥९७॥ रक्ताम्बरो रक्ततनू रक्तमाल्यानुलेपनः। महोदरो गजमुखः पाशदन्ताङ्कुशाभये ॥९८॥ बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययम् ॥

तत्रतत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन् ॥९९॥ एक एव महाशक्तिः कुरुते सर्वमञ्जसा ॥

स्वयमुद्देशवान्पूर्वपूर्वो हृदयसंयुतः ॥१००॥ धान्वन्तरो महामन्त्रः संसृतिव्याधिनाशनः । अत्रोक्तसर्वमन्त्राणां नायकोपलसन्निभः ॥१०१॥ छ॥ चन्द्रोघकान्तिममृतात्मकरैर्जगन्ति सञ्जीवयन्तममितात्मसुखं परेशम् । ज्ञानं सुधाकलशमेव च सन्दधानं शीतांशुमण्डलगतं स्मरतात्मसंस्थम् ॥१०२॥ मूर्ध्निस्थितादमुत एव सुधां स्रवन्तं भ्रूमध्यगाच्च तत एव च तालुसंस्थात् । हार्दाच्च नाभिसदनादधरस्थिताच्च ध्यात्वाभिपूरिततनुर्दुरितं निहन्यात् ॥१०३॥ अज्ञानदुःखभयरोगमहाविषाणि योगोऽयमाशु विनिहन्ति सुखं च दद्यात् । उन्मादविभ्रमहरः परतश्च सान्द्रस्वानन्दमेव पदमापयति स्म नित्यम् ॥१०४॥ ध्यात्वैव हस्ततलगं स्वमृतं स्रवन्तं देवं स यस्य शिरसि स्वकरं निधाय । आवर्तयेन्मनुमिमं स तु वीतरोगः पापादपैति मनसा यदि भक्तिनम्रः ॥१०५॥ शतं सहस्रमयुतं लक्षं वा रोगसंक्षयात् । इममेव जपेन्मन्त्रं साधूनां दुःखशान्तये ॥१०६॥ ज्वरदाहादिशान्त्यर्थं तर्पयेन्मनुनामुना । ध्यात्वा हरिं जले सप्तरात्रं जूर्तिर्विनश्यति ॥१०७॥ अयुतामृतसमिद्धोमाद्गोघृत-क्षीरसंयुतात् । सर्वे रोगा विनश्यन्ति विमुखो न हरेर्यदि ॥१०८॥ भूताभिचारशांत्यर्थमपामार्गाहुतिक्रिया । द्विगुणामृतया पश्चात्केवलेन घृतेन वा ॥१०९॥ आयुर्विवृद्धये नित्यं जन्मनक्षत्र एव वा । चतुश्चतुर्भिर्दूर्वाभिः क्षीराज्याक्ताभिरिष्यते ॥११०॥

सर्वाः क्रिया हरौ भक्ते हरिभक्तैः स्वनुष्ठिताः । गुरुभक्तैः सदाचारैः फलन्त्यद्धा न चान्यथा ॥१११॥ ब्रह्मान्ता गुरुवश्चैव संप्रदायप्रवर्तकाः । तत्तद्गुणानुसारेण पूज्या मान्याश्च कृत्स्नशः ॥११२॥ सर्वेभ्योऽभ्यधिका भक्तिर्विष्णौ स्यादतिनिश्चला । लक्ष्मी ब्रह्मादिषु ततः क्रमेण स्यात्सुभाविता ॥११३॥ एवं विद्याः-फलिष्यन्ति नान्यथा तु कथञ्चन। शुभान्ध्यायन्ति ये कामान् गुरु देवप्रसादजान् ॥११४॥ इतरानात्मपापोत्थांस्तेषां विद्या फलिष्यति। मुक्तावपि च संसारे नात्मनो विष्णुतां क्वचित् ॥११५॥ ब्रह्मरुद्रादिभावं वा साम्यं

वाधिक्यमेव वा । अतद्वशत्वमथवा यः स्मरेत्स तु सिद्धिभाक् ॥११६॥ नान्यथा सिद्धिमाप्नोति कल्पकोटिशतैरपि । स्मृत्वा गुरुं पूर्वगुरुमादि-मूलगुरुंस्तथा ॥११७॥ देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् । अवज्ञता गुरूणां च देवतानां न सिध्यति ॥११८॥ प्रयाति च तमो घोरं मन्त्रावज्ञाकृदेव च । यस्तारतम्यवेत्ता स्याद्गुरूणां देवतास्वपि ॥११९॥ भक्तिमान् गुरुदेवेषु तद्भक्तेषु च सिध्यति । गुरुदेवप्रतीपानां विमुखस्तत्प्रिये रतः ॥१२०॥ अकामक्रोधलोभश्च नचिरात्सिद्धिमाप्नुयात् । सकामेभ्योऽमितगुणा ह्यकामैस्तु कृताः क्रियाः ॥१२१॥ तस्मादकाम एवालं भजेद्विष्णुं सनातनम् ॥

अयं मे हस्त इति च मन्त्रः पूर्वोक्तवत्स्मृतः ॥१२२॥ अत्रोक्तास्तु क्रियाः सर्वमन्त्रेष्वप्युपलक्षणम् । विजयस्तंभनादीनि नारसिंहैर्विशेषतः ॥१२३॥ जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि । वाराहैः स्तम्भनं क्षिप्रं श्रीकराः कथिताः पुरा ॥१२४॥ बहुबाहुं महाकायमुद्युक्तं चोद्यतायुधम् । स्मरन्विजयमाप्नोति स्तम्भनादींश्च कारयेत् ॥१२५॥ वसुपूर्णकरं रत्नपर्वतस्थं विभावयन् । वसुसिद्धिमवाप्नोति सेव्यमानामजादिभिः ॥१२६॥ श्रिया विभूतिभिर्युक्तं भावयन् भूतिमाप्नुयात् । यद्यन्मनोगतं तस्य तत्तदाप्नोत्यसंशयम् ॥१२७॥ तथातथा हरिं ध्यायन् क्रियास्तास्ताश्च साधयन् । श्रिये पद्मानि जुहुयात्संप्रीत्या उत्पलानि च ॥१२८॥ शरान् जयाय जुहुयादभिमन्त्र्य प्रयोजयेत् । विद्यायै मन्त्रितं वारि वचां वा तुलसीमपि ॥१२९॥ ब्राह्मीं घृतं (घृष्टं) सुवर्णं वा शतावृत्त्या तु नित्यशः । अकुर्वंश्च क्रियां भक्त्या निरपेक्षो भजन्हरिम् ॥१३०॥ सर्वमेतदवाप्नोति विशेषेण न संशयः ॥

सृष्टिस्थितिलयन्यासाः प्रातिलोम्यानुलोमतः ॥१३१॥ स्थित्यन्ता एव वर्णानां श्रेष्ठा एवं चतुर्दश । संहृत्यन्ता मोक्षिणां च एकविंशतिरेव वा ॥१३२॥ पादहृत्केषु नाभ्यास्ययुक्तं च स ललाटकम् । सनासिका

सदृग्जान्वा सश्रोत्रं सोरुकं तथा ।।१३३।। सोरस्कं च सकण्ठं च सभुजद्वयमेव च। सगण्डयुग्मं सालीकं सतुण्डक्रोडकं तथा ।।१३४।। समूलं च सगुह्यं च सपार्श्वद्वयमेव च । सदोर्द्वयं व्यापकं च गलपार्श्वद्वयेन च ।।१३५।। ककुत्स्तन द्वयेनापि पृष्ठमूलेन सर्वशः । न्यासो यथाक्रमं प्रोक्तो मन्त्रष्वेतेषु कृत्स्नशः ।।१३६।। प्रतिमायामात्मनि च न्यासोऽयं सन्निधानकृत् ।।

बीजांतःसाध्यमध्यं च विभक्तदलमन्त्रयुक् ।।१३७।। वर्णानुप्रातिलोम्येन वृत्तं भूपुरसंयुतम्। बीजसंदृब्धकोणं च यन्त्रं रक्षादि साधकम् ।।१३८।। समं तत्सर्वमन्त्रेषु जप्तं धार्यं तु वा भुवि। विलिख्य मण्डले वा तत्पूजयेद्धरिमञ्जसा ।।२३१।। प्रतिमालक्षणैर्याविद्युक्त आचार्य उत्तमः। सर्ववित्तपसा युक्त आज्ञाशक्तियुतो हरेः ।।१४०।। यावद्भक्तो यथालब्दैर्गुणैयुक्तोऽथ वैष्णवः । गुरुः सत्संप्रदायज्ञस्तारतम्येन सिद्धिदः ।।१४१।। उत्तमादुत्तमासिद्धिर्धर्ममोक्षादिषु स्फुटम्। तस्मादुत्तम आचार्ये लब्धे नातोऽवरं व्रजेत् ।।१४२।। एकस्य शिष्यतां प्राप्य तदाज्ञां न विना समम्। अवरं वा व्रजेदुच्चगुणश्चेन्नैव दुष्यति ।।१४३।। विशेषतो गुणश्च स्याद्देवेष्वप्येवमेव हि। तस्मादुत्तममाचार्यं देवेशं चाश्रयेद्धरिं ।।१४४।।

अपरोक्षदृशेरेव यस्मान्मोक्षो न चान्यथा । अपरोक्षदृशिश्चैव श्रवणान्मननादनु ।।१४५।। सम्यङ्निश्चिततत्त्वस्य निदिध्यासनया भवेत्। द्विविधा सा च संप्रोक्ता विष्णुशास्त्रावमर्शनम् ।।१४६।। एकं ध्यानं हरेरन्यच्चत्वार्यंगानि तस्य च । यमश्च नियमश्चासा प्राणायाम इतीरितः ।।१४८।। अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ। यमाः शौचं तपस्तुष्टिः स्वाध्यायो हरिपूजनम् ।।१४८।। नियमा वीरपद्मे च स्वस्तिकाद्यानि चासनम्। रेचकः पूरकश्चैव कुम्भकश्च त्रिधा स्मृतः ।।१४९।। प्राणायामः स्मृतिं विष्णोर्विना नियम उच्यते । अधीति स्मृतियुक्तो हि निदिध्यासनमेव हि ।।१५०।।

प्राणायामे च विष्णोर्यत्स्मरणं ध्यानमेव तत् । आसा शौचं प्राणयमो निष्परिग्रह पूर्वकाः ॥१५१॥

तप आद्याः क्रमात्सर्व उत्तरोत्तरतोऽधिकाः सर्वतः श्रवणाद्यास्तु मुख्या मुक्तिप्रसाधने ॥१५२॥ अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा। ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनं ॥१५३॥ स्वयं दशगुणं तस्माव्द्याख्यैकस्य शतोत्तरा। अपरोक्षदृशाऽप्येषा कर्तव्या विष्णुतुष्टिदा ॥१५४॥ य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥१५५॥ न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः । भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥१५६॥

शौचासने त्वङ्गमात्रं न पृथग्धर्मकारणम् । प्राणायामादयस्तुष्टिपर्यन्ता द्विगुणाधिकाः ॥१५७॥ स्वाध्यायोऽतः कोटिगुणस्ततोऽनन्तगुणा हरेः । पूजा तत्त्रिगुणं ध्यानमिति धर्मक्रमः स्मृतः ॥१५८॥ ऊर्वोरधः पदोरुर्ध्वं विभागेनेति च त्रिधा । आसनत्रयमुद्दिष्टं मन्त्रस्मरणपूर्वकम् ॥१५९॥ द्विगुणोत्तरं रेचकादि षोडशादिक्रमेण तु । मात्राणां ह्रस्ववर्णस्य कालो मात्रेति शब्द्यते ॥१६०॥ क्रमेणैवाभ्यसेन्मात्रां वृद्धिमेकाग्रधीः पुनः ॥

रेचयित्वा दक्षिणतः पूरयित्वा च वामतः ॥१६१॥ कुंभकश्च सुषुम्नायां विष्णुं वायुं च संस्मरेत् । मूलाधारं समारभ्य त्वामूर्धानमृजुस्थिता ॥१६२॥ मध्ये सुषुम्ना विज्ञेया वज्रिकार्या प्रकाशि(नी)का । वैद्युता ब्रह्मनाडीति सैव पञ्चप्रभेदिनी ॥१६३॥ पृष्टवामाग्रदक्षांतर्भेदास्तेषु क्रमेण तु । हरिर्नीलः सितः पिङ्गो लोहितश्चात्र केशवः ॥ प्रद्युम्नादिस्वरूपेण ध्येयः सिद्धिमभीप्सता ॥१६४॥ मूले च नाभौ हृदयेन्द्रयोनिभ्रूमध्यद्विषडन्तकेषु । चतुःषडष्टद्विचतुर्द्विषट्कदलेषु पद्मेषु सितारुणेषु ॥१६५॥ पञ्चात्मकोऽसौ भगवान्सदैव ध्येयो हृदन्तान्यरुणानि तानि । त्रिकोणवह्नौ च षडश्रवायौ द्विस्तावदश्ररविवृत्तशशित्रिवह्नौ ॥१६६॥ वृत्ते विधावपि विचिन्त्यमिदं दशार्धरूपं सितं तदखिलं हृदयात्परस्थम् ।

इडा च पिङ्गळा चैव वर्जिका धारिणी तथा ॥१६७॥ सुषुम्नायाश्चतुर्दिक्षु वज्रिकाद्यासु तत्र च । चतुर्मूर्तिः स भगवान्हृदये संव्यवस्थितः ॥१६८॥ द्वासप्ततिसहस्राणि नाड्योऽन्यास्तु प्रधानतः । बृहतीसहस्रपर्शानामृचां वाच्योऽत्र केशवः ॥१६९॥ रूपाणां लक्षणं तेषां रहस्यत्वान्न कथ्यते ॥१७०॥विष्णुना ब्रह्मणे प्रोक्तं ग्रन्थसङ्कोचतस्तथा ॥

खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ॥१७१॥ अप्रयत्नात्समाधिश्च दर्शनं चिरयाऽनया । अथवा सततं शास्त्रविमर्शेन भविष्यति ॥१७२॥ परमस्नेहसंयुक्तयथार्थज्ञानतो भवेत् । सा भक्तिरितिविज्ञेया साधनं भोगमोक्षयोः ॥१७३॥ मुख्यमेषैव नान्यत्स्यात्सर्वं व्यर्थं तया विना । सैकाप्यभीष्टफलदा मोक्षो दर्शनयुक्तया ॥१७४॥ दर्शनं च तया हीनं व्यर्थमन्यत्किमुच्यते । योग्यं तु दर्शनं नैव तया हीनं भविष्यति ॥१७५॥

आनन्दचित्सदितिपूर्वगुणैः समस्तैर्मर्त्यादिभिर्विधिपरैर्भगवान् क्रमेण ।
ध्यातोऽधिकैरधिगुणोऽधिकमेव सौख्यं मुक्तौ ददाति सततं परमस्वरूपः ॥१७६॥

निर्दोषाखिलसम्पूर्णगुणेन हरिणा स्वयम् ।
ब्रह्मणे कथितात्तन्त्रसारादुद्धृत्य सादरम् ॥१७७॥

आनन्दतीर्थमुनिना कृतो ग्रथोऽयमञ्जसा ।
ग्रन्थोऽयं पाठमात्रेण सकलाभीष्टसिद्धिदः ॥१७८॥
किमु ज्ञानादनुष्ठानादुभयस्मात्पुनः किमु ॥१७९॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट्तद्दर्शनमित्थमेव निहितं देवस्य भर्गो महत् ।

वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥१८०॥

अशेषदोषोज्झितपूर्णसद्गुणं सदा विशेषापगतोरुरूपम् ।
नमामि नारायणमप्रतीपं सदा प्रियेभ्यः प्रियमादरेण ॥१८१॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमत्तन्त्रसारसङ्ग्रहे चतुर्थोऽध्यायः सम्पूर्णः ॥**

**॥ श्रीमत्तन्त्रसारसंग्रहः समाप्तः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



॥ श्री ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता

# सदाचारस्मृतिः

॥ ॐ ॥ यस्मिन्सर्वाणि कर्माणि सन्यस्याध्यात्मतेतसा । निरशीर्निर्ममो याति परं जयति सोऽच्युतः॥१॥ स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि । धौतदन्तः समाचम्य स्नानं कुर्याद्विधानतः ॥२॥ उद्धृतेति मृदालिप्य द्विषडष्टषडक्षरैः । त्रिर्निमज्याऽऽप्यसूक्तेन प्रोक्षयित्वा पुनस्तथा ॥३॥ मृदालिप्यनिमज्य त्रिस्त्रिर्जपेदघमर्षणम् । स्रष्टारं सर्वलोकानां स्मृत्वा नारायणं परम् ॥४॥ यतश्वासो निमग्नोऽप्सु प्रणवेनोत्थितस्ततः । सिञ्चेत्पुरुषसूक्तेन स्वदेहस्थं हरिं स्मरन् ॥४॥ वसित्वा वास आचम्य प्रोक्ष्याचम्य च मन्त्रतः । गायत्र्या चाञ्जलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ॥६॥ मन्त्रतः परिवृत्याथ समाचम्य सुरादिकान् । तर्पयित्वा निपीड्याथ वासो विस्तृत्य चाञ्जसा ॥७॥

अर्कमण्डलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् । सहस्रपरमां देवीं शतमध्यां दशावराम् ॥८॥ आसूर्यदर्शनात्तिष्ठेत्ततस्तूपविशेत वा । पूर्वां सन्ध्यां सनक्षत्रामुत्तरां सदिवाकराम् ॥९॥ उत्तरामुपविश्यैव वाग्यतः सर्वदा जपेत् । ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥१०॥ गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् । प्रणम्य देवान्विप्रांश्च गुरूंश्च हरिपार्षदान् ॥११॥

एवं सर्वोत्तमं विष्णुं ध्यायन्नेवार्चयेद्धरिम् । ध्यानप्रवचनाभ्यां च यथायोग्यमुपासनम् ॥१२॥ धर्मेणेज्यासाधनानि साधयित्वा विधानतः । स्नात्वा सम्पूजयेद्विष्णुं वेदतन्त्रोक्तमार्गतः ॥१३॥ वैश्वदेवं बलिं चैव कुर्यान्नित्यं तदर्पणम् । इष्टं दत्तं हुतं जप्तं पूर्तं यच्चात्मनः प्रियम् ॥१४॥ दारान् सुतान् प्रियान् प्राणान् परस्मै सन्निवेदयेत् । भुक्तशेषं भगवतो भृत्यातिथिपुरस्सरः ॥१५॥ भुञ्जीत हृद्गतं विष्णुं स्मरंस्तद्गतमानसः । आचम्यमूलमन्त्रेण कोष्ठं स्वमभिमन्त्रयेत् ॥१६॥ वेदशास्त्रविनोदेन प्रीणयन्पुरुषोत्तमम् । अहःशेषं नयेत्सन्ध्यामुपासीताथ पूर्ववत् ॥१७॥ यामात्परत एवाथ स्वपेध्द्यायञ्जनार्दनम् । अन्तराले ततो बुद्ध्वा स्मरेत बहुशो हरिम् ॥१८॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतः स्वभावम् । करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत्तत् ॥१९॥

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥२०॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥२१॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥२२॥ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ॥ स सर्वविद्भजति मां सर्वभावेन भारत ॥२३॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ । एतद्बुध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत' ॥२४॥ 'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः' ॥२४॥ 'ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥२६॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमुढांस्तान्विद्धि नष्टानचेतसः' ॥२७॥ 'द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च । विष्णुभक्तिपरो दैवो विपरीतस्तथासुरः' ॥२८॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः'॥२९॥ 'धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत । पापं भवति

धर्मोऽपि यो नभक्तैः कृतो हरेः ॥३०॥ 'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। नित्यं भवेच्च मन्निष्ठो बुभुषुः पुरुषस्तथा' ॥३१॥

एष नित्यः सदाचारो गृहिणो वनिनस्तथा। वैश्वदेवं बलिं दन्तधावनं चाप्यृते बटोः ॥३२॥ एवमेव यतेः स्वीयवित्तेन तु विना सदा। मूलमन्त्रैः सदास्नानं विष्णोरेव च तर्पणम् ॥३३॥ विशेषो निष्क्रिययतेरजलाञ्जलिना तथा। तर्पणं तु हरेरेव यतेरन्यस्य चोदितम् ॥३४॥ समिद्धोमो बटोश्चैव स्मृत्वा विष्णुं हुताशने। सर्ववर्णाश्रमैर्विष्णुरेक एवेज्यते सदा ॥३५॥ रमाब्रह्मादयस्तस्य परिवारतयैव तु ॥३६॥ 'कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः। सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात्' ॥३७॥ 'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाऽभिवदन्यदास्ते ॥३८॥ धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' ॥३९॥

आनन्दतीर्थमुनिना व्यासवाक्यसमुद्धृतिः ।
सदाचारस्य विषये कृता सङ्क्षेपतः शुभा ॥४०॥
अशेषकल्यणगुणनित्यानुभवसत्तनुः ।
अशेषदोषरहितः प्रीयतां पुरुषोत्तमः ॥४१॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिता**
**सदाचारस्मृतिः सम्पूर्णा ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**



॥ श्री ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# द्वादशस्तोत्रम्

॥ॐ॥ वन्दे वन्द्यं सदानन्दं वासुदेवं निरञ्जनम् । इन्दिरापतिमाद्यादिवरदेशवरप्रदम् ॥१॥ नमामि निखिलाधीशकिरीटाघृष्टपीठवत् ॥ हृत्तमश्शमनेऽर्काभं श्रीपतेः पादपङ्कजम् ॥२॥ जाम्बूनदाम्बराधारं नितम्बं चिन्त्यमीशितुः ॥ स्वर्णमञ्जीरसंवीतमारूढं जगदम्बया ॥३॥ उदरं चिन्त्यमीशस्य तनुत्वेऽप्यखिलंभरम् । वलित्रयाङ्कितं नित्यमुपगूढं श्रियैकया ॥४॥ स्मरणीयमुरो विष्णोरिन्दिरावासमीशितुः ॥ अनन्तमन्तवदिव भुजयोरन्तरं गतम् ॥ ५॥ शङ्खचक्रगदापद्मधराश्चिन्त्या हरेर्भुजाः । पीनवृत्ता जगद्रक्षाकेवलोद्योगिनोऽनिशम् ॥६॥ सन्ततं चिन्तयेत्कण्ठं भास्वत्कौस्तुभभासकम् ॥ वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः ॥७॥ स्मरेत यामिनीनाथसहस्रामितकान्तिमत् । भवतापापनोदीड्यं श्रीपतेर्मुखपङ्कजम् ॥८॥ पूर्णानन्यसुखोद्भासि मन्दस्मितमधीशितुः । गोविन्दस्य सदा चिन्त्यं नित्यानन्दपदप्रदम् ॥९॥ स्मरामि भवसन्तापहानिदामृतसागरम् । पूर्णानन्दस्य रामस्य सानुरागावलोकनम् ॥१०॥ ध्योयेदजस्रमीशस्य पद्मजादिप्रतीक्षितम्। भ्रूभङ्गं पारमेष्ठ्यादिपददायि विमुक्तिदम् ॥११॥ सन्ततं चिन्तयेऽनन्तमन्तकाले विशेषतः । नैवोदापुर्गृणन्तोऽन्तं यद्गुणानामजादयः ॥१२॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे प्रथमोऽध्यायः ॥१॥**

सुजनोदधिसंवृद्धि पूर्णचन्द्रो गुणार्णवः । अमन्दानन्दसान्द्रो नः प्रीयतां इन्दिरापतिः ॥१॥ रमाचकोरिविधवे दुष्टतर्पोदवह्नये । सत्पान्थजनगेहाय नमो नारायणाय ते ॥२॥ चिदचिद्भेदमखिलं विधायाधाय भुञ्जते । अव्याकृतगृहस्थाय रमाप्रणयिने नमः ॥३॥ अमन्दगुणसारोऽपि मन्दहासेन वीक्षितः । नित्यमन्दिरयाऽनन्दसान्द्रो यो नौमि तं हरिम् ॥४॥ वशी वशे न कस्यापि योऽजितो विजिताखिलः । सर्वकर्ता न क्रियते तं नमामि रमापतिम् ॥५॥ अगुणाय गुणोद्रेकस्वरूपायादिकारिणे । विदारितारिसङ्घाय वासुदेवाय ते नमः ॥६॥ आदिदेवाय देवानां पतये सादितारये । अनाद्यज्ञानपाराय नमो वरवराय ते ॥७॥ अजाय जनयित्रेऽस्य विजिताखिलदानव । अजादिपूज्यपादाय नमस्ते गरुडध्वज ॥८॥ इन्दिरामन्दसान्द्राग्र्यकटाक्षप्रेक्षितात्मने । अस्मदिष्टैककार्याय पूर्णाय हरये नमः ॥९॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे द्वितीयोऽध्यायः ॥२॥**

कुरु भुङ्क्ष्व च कर्म निजं नियतं हरि पादविनम्रधिया सततम् ॥ हरिरेव परो हरिरेव गुरुर्हरिरेव जगत्पितृमातृगतिः ॥१॥ न ततोऽस्त्यपरं जगतीड्यतमं परमात्परतः पुरुषोत्तमतः । तदलं बहुलोकविचिन्तनया प्रवणं कुरु मानसमीशपदे ॥२॥ यततोऽपि हरेः पदसंस्मरणे सकलं ह्यघमाशुलयं व्रजति । स्मरतस्तु विमुक्तिपदं परमं स्फुटमेष्यति तत्किमपाक्रियते ॥३॥ श्रृणुतामलसत्यवचः परमं शपथेरितमुच्छ्रितबाहुयुगम् । न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥४॥ यदि नाम परो न भवेत्स हरिः कथमस्य वशे जगदेतदभूत् । यदि नाम न तस्य वशे सकलं कथमेव तु नित्यसुखं न भवेत् ॥५॥ न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः । चिदचित्तनु सर्वमसौ तु हरिर्यमयेदिति वैदिकमस्ति वचः ॥६॥

व्यवहारभिदाऽपि गुरोर्जगतां न तु चित्तगता स हि चोद्यपरम् । बहवः पुरुषाः पुरुषप्रवरो हरिरित्यवदत्स्वयमेव हरिः ॥७॥ चतुराननपूर्वविमुक्तगणा हरिमेत्य तु पूर्ववदेव सदा ॥नियतोच्चविनीचतयैव निजां स्थितिमापुरिति स्म परं वचनम् ॥८॥ आनन्दतीर्थसन्नाम्ना पूर्णप्रज्ञाऽभिधायुजा । कृतं हर्यष्टकं भक्त्या पठतः प्रीयते हरिः ॥९॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे तृतीयोऽध्यायः ॥३॥**

निजपूर्णसुखामितबोधतनुः परशक्तिरनन्तगुणः परमः । अजरामरणः सकलार्तिहरः कमलापतिरीडचतमोऽवतुः नः ॥१॥ यदसुप्तिगतोऽपि हरिः सुखवान्सुखरूपिणमाहुरतो निगमाः । स्वमतिप्रभवं जगदस्य यतः परबोधतनुं च ततः खपतिम् ॥२॥ बहुचित्रजगद्बहुधाकरणात्परशक्तिरनन्तगुणः परमः । सुखरूपममुष्य पदं परमं स्मरतस्तु भविष्यति तत्सततम् ॥३॥ स्मरणे हि परेशितुरस्य विभोर्मलिनानि मनांसि कुतः करणम् । विमलं हि पदं परमं स्वरतं तरुणार्कसवर्णमजस्य हरेः ॥४॥ विमलैः श्रुतिशाणनिशाततमैः सुमनोऽसिभिराशु निहत्य दृढम् । बलिनं निजवैरिणमात्मतमो-भिदमीशमनन्तमुपास्व हरिम् ॥५॥ स हि विश्वसृजो विभुशंभुपुरंदरसूर्य-मुखानपरानपरान् । सृजतीडचतमोऽवति हन्ति निजं पदमापयति प्रणतान्सुधिया ॥६॥ परमोऽपि रमेशितुरस्य समो न हि कश्चिदभून्नभविष्यति च । क्वचिदद्यतनोऽपि न पूर्णसदागणितेडचगुणानुभवैकतनोः ॥७॥ इति देववरस्य हरेः स्तवनं कृतवान्मुनिरुत्तममादरतः ॥ सुखतीर्थपदाभिहितः पठतस्तदिदं भवति ध्रुवमुच्चसुखम् ॥८॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे चतुर्थोऽध्यायः ॥४॥**

वासुदेवापरिमेयसुधामन् शुद्धसदोदित सुन्दरीकान्त ।। धराधरधारण वेधुरधर्तस्सौधृतिदीधृतिवेधृविधात ।।१।। अधिकबन्धं रन्धय बोधाच्छिन्धि पिधानं बन्धुरमद्धा । केशव केशव शासक वन्दे पाशधरार्चित शूरवरेश ।।२।। नारायणामलकारण वन्दे कारणकारण पूर्ण वरेण्य । माधव माधव साधक वन्दे बाधक बोधक शुद्धसमाधे ।।३।। गोविन्द गोविन्दपुरन्दर वन्दे स्कन्दसुनन्दनवन्दितपाद । विष्णो सृजिष्णो ग्रसिष्णो विवन्दे कृष्ण सदुष्ण वधिष्णो सुधृष्णो ।।४।। मधुसूदन दानवसादन वन्दे दैवतमोदित वेदितपाद। त्रिविक्रम निष्क्रम विक्रम वन्दे सुक्रम संक्रम हुंकृतवक्त्र ।।५।। वामन वामन भामन वन्दे सामन सीमन शामन सानो। श्रीधर श्रीधर शन्धर वन्दे भूधर वार्धर कन्धरधारिन् ।।६।। हृषीकेश सुकेश परेश विवन्दे शरणेश कलेश बलेश सुखेश। पद्मनाभ शुभोद्भव वन्दे सम्भृतलोकभराभर भूरे ।।७।। दामोदर दूरतरान्तर वन्दे दारितपारगपार परस्मात् ।।८।। आनन्दतीर्थमुनीन्द्रकृता हरिगीतिरियं परमादरतः । परलोकविलोकनसूर्यनिभा हरिभक्तिविवर्धनशौण्डतमा ।।९।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे पञ्चमोऽध्यायः।।५।।**

मत्स्यकरूप लयोदविराहिन् वेदविनेतृचतुर्मुखवन्द्य । कूर्मस्वरूपक मन्दरधारिन् लोकविधारक देववरेण्य ।।१।। सूकररूपक दानवशत्रो भूमिविधारक यज्ञवराङ्ग । देव नृसिंह हिरण्यकशत्रो सर्वभयान्तक दैवतबन्धो ।।२।। वामन वामनमाणववेष दैत्यवरान्तक कारणरूप। राम भृगूद्वह सूर्जितदीप्ते क्षत्रकुलान्तक शम्भुवरेण्य ।।३।। राघव राघव राक्षसशत्रो मारुतिवल्लभ जानकीकन्त। देवकिनन्दन सुन्दररूप रुक्मिणिवल्लभ पाण्डवबन्धो ।।४।। देवकिनन्दन नन्दकुमार वृन्दावनाञ्चन गोकुलचन्द्र । कन्दफलाशन सुन्दररूप

नन्दितगोकुल वन्दितपाद ।।५।। इन्द्रसुतावक नन्दकहस्त चन्दनचर्चित सुन्दरीनाथ। इन्दीवरोदरदलनयन मन्दरधारिन् गोविन्द वन्दे।।६।। चन्द्रसुतानन कुन्दसुहास नन्दितदैवतानन्दसुपूर्ण । दैत्यविमोहक नित्यसुखादे देवसुभोधक बुद्धस्वरूप ।।७।। दुष्टकुलान्तक कल्किस्वरूप धर्मविवर्धन मूलयुगादे । नारायणमल कारणमूर्ते पूर्णगुणार्णव नित्यवि(सु)बोध ।।८।। आनन्दतीर्थमुनीन्द्रकृता हरिगाथा पापहराशुभा नित्यसुखार्था ।।९।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे षष्ठोऽध्यायः।।६।।**

विश्वस्थितिप्रलयसर्गमहाविभूतिवृत्तिप्रकाशनियमावृतिबन्धमोक्षाः । यस्या अपाङ्गलवमात्रत ऊर्जिता सा श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।१।। ब्रह्मेशशक्ररविधर्मशशाङ्कपूर्वगीर्वाणसन्ततिरियं यदपाङ्गलेशम् । आश्रित्य विश्वविजयं विसृजत्यचिन्त्या श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।२।। धर्मार्थकामसुमतिप्रचयाद्यशेषसन्मङ्गलं विदधते यदपाङ्गलेशम् । आश्रित्य तत्प्रणतसत्प्रणता अपीड्य श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।३।। षड्वर्गनिग्रहनिरस्तसमस्तदोषा ध्यायन्ति विष्णुमृषयो यदपाङ्गलेशम् । आश्रित्य यानपि समेत्य न याति दुःखं श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।४।। शेषाहिवैरिशिवशक्रमनुप्रधानचित्रोरुकर्मरचनं यदपाङ्गलेशम्। आश्रित्य विश्वमखिलं विदधाति धाता श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।५।। शक्रोग्रदीधितिहिमाकरसूर्यसूनुपूर्वं निहत्य निखिलं यदपाङ्गलेशम् । आश्रित्य नृत्यति शिवः प्रकटोरुक्तिः श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।६।। तत्पादपङ्कजमहासनताभवाप शर्वादिवंद्यचरणो यदपाङ्गलेशम् । आश्रित्य नागपतिरन्यसुरैर्दुरापां श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।७।। नागारिरुग्रबलपौरुष आप विष्णोर्वाहत्वमुत्तमजवो यदपाङ्गलेशम्। आश्रित्य शक्रमुखदेवगणैरचिन्त्यं श्रीर्यत्कटाक्षबलवत्यजितं नमामि ।।८।।

आनन्दतीर्थमुनिसन्मुखपङ्कजोत्थं साक्षाद्रमाहरिमनःप्रियमुत्तमार्थम् । भक्त्या पठत्यजितमात्मनि सन्निधाय यःस्तोत्रमेतदभियाति तयोरभीष्टम् ।।९।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे सप्तमोऽध्यायः ।।७।।**

वन्दिताशेषवन्द्योरुवृन्दारकं चन्दनाचर्चितोदारपीनांसकम् । इन्दिराचञ्चलापाङ्गनीराजितं मन्दरोद्धारिवृत्तोद्भुजाभोगिनम् । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।१।। सृष्टिसंहारलीलाविलासाततं पुष्टषाड्गुण्यसद्विग्रहोल्लासिनम् । दुष्टनिःशेषसंहारकर्मोद्यतं हृष्टपुष्टानुशिष्टप्रजासंश्रयम् । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।२।। उन्नतप्रार्थिताशेषसंसाधकं सन्नतालौकिकानन्ददश्रीपतिम् । भिन्नकर्माशयप्राणिसंप्रेरकं तन्न किं नेति विद्वत्सु मीमांसितम् । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।३।। विप्रमुख्यैः सदा वेदवादोन्मुखैः सुप्रतापैः क्षितीशेश्वरैश्चार्चितम् ।। अप्रतर्क्योरुसंविद्गुणं निर्मलं सप्रकाशाजरानन्दरूपं परम्। प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।४।। अत्ययो यस्य केनापि न क्वापि हि प्रत्ययो यद्गुणेषूत्तमानां परः । सत्यसङ्कल्प एको वरेण्यो वशी मत्यनूनैः सदा वेदवादोदितः । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।५।। पश्यतां दुःखःसन्ताननिर्मूलनं दृश्यतां दृश्यतामित्यजेशार्चितम् । नश्यतां दूरगं सर्वदाप्यात्मगं वश्यतां स्वेच्छया सज्जनेष्वागतम् । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।६।। अग्रजं यः ससर्जाजमग्र्याकृतिं विग्रहो यस्य सर्वे गुणा एव हि । उग्र आद्योऽपि यस्यात्मजाग्र्यात्मजः सद्गृहीतः सदा यः परं दैवतम् ।। प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ।।७।। अच्युतो यो गुणैर्नित्यमेवाखिलैः प्रच्युतोऽशेषदोषैः सदा पूर्तितः ।। उच्यते सर्ववेदोरुवादैरजः स्वर्चितो ब्रह्मरुद्रेंद्रपूर्वैः सदा पूर्तितः । प्रीणयामो वासुदेवं

देवतामण्डलाखण्डमण्डनम् ॥८॥ धार्यते येन विश्वं सदाजादिकं वार्यतेऽशेषदुःखं निजध्यायिनाम् । पार्यते सर्वमन्यैर्न यत्पार्यते कार्यते चाखिलं सर्वभूतैः सदा । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥९॥ सर्वपापानि यत्संस्मृतेः संक्षयं सर्वदा यान्ति भक्त्या विशुद्धात्मनाम् । शर्वगुर्वादिगीर्वाणसंस्थानदः कुर्वते कर्म यत्प्रीयते सज्जनाः । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥१०॥ अक्षयं कर्म यस्मिन्परे स्वर्पितं प्रक्षयं यान्ति दुःखानि यन्नामतः । अक्षरो योऽजरः सर्वदैवामृतः कुक्षिगं यस्य विश्वं सदाजादिकम् । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥११॥ नन्दतीर्थोरुसन्नामिनो नन्दिनः सन्दधानाः सदानन्ददेवे मतिम् । मन्दहासारुणापाङ्गदत्तोन्नतिं नन्दिताशेषदेवादिवृन्दं सदा । प्रीणयामो वासुदेवं देवतामण्डलाखण्डमण्डनम् ॥ १२ ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे अष्टमोऽध्यायः ॥ ८ ॥**

अतिमततमोगिरिसमितिविभेदन पितामहभूतिद गुणगणनिलय । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१॥ विधिभवमुखसुरसततसुवन्दित रमामनोवल्लभ भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥२॥ अगणितगुणगणमयशरीर हे विगतगुणेतर भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥३॥ अपरिमितसुखनिधिविमलसुदेह हे विगतसुखेतर भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥४॥ प्रचलितलयजलविहरण शाश्वत सुखमय मीन हे भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥५॥ सुरदितिजसुबलविलुलित मन्दरधर परकूर्म हे भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥६॥ सगिरिवरधरातलवह सुसूकर परमविबोध हे भव मम शरणम् । शुभतमकथाशय

परम सदोदित जगदेककारण राम रमा रमण ॥७॥ अतिबलदितिसुतहृदयविभेदन जयनृहरेऽमल भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥८॥ बलिमुखदितिसुतविजयविनाशन जगदवनाजित भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥९॥ अविजितकुनृपतिसमितिविखण्डन रमावर वीरप भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१०॥ खरतर निशिचर दहनपरामृत रघुवर मानद भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥११॥ सुललिततनुवर वरद महाबल यदुवर पार्थप भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१२॥ दितिसुतमोहन विमलविबोधन परगुण बुद्ध हे भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१३॥ कलिमलहुतवह सुभग महोत्सव शरणद कल्कीश हे भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१४॥ अखिलजनिविलयपरसुखकारण पर पुरुषोत्तम भव मम शरणम् । शुभतमकथाशय परम सदोदित जगदेककारण राम रमा रमण ॥१५॥ इति तव नुतिवरसततरतेर्भव सुशरणमुरु सुखतीर्थमुनेर्भगवन् ॥१६॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे नवमोऽध्यायः॥९॥**

अवनश्रीपतिरप्रतिरधिकेशादिभवादे । करुणापूर्ण वरप्रदचरितं ज्ञापय मे ते ॥१॥ सुरवन्द्याधिप सद्वर भरिताशेषगुणालम् । करुणापूर्ण वरप्रद चरितं ज्ञापय मेते ॥२॥ सकलध्वान्तविनाशक परमानन्दसुधाहो । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥३॥ त्रिजगत्पोत सदार्चितचरणाशापतिधातो । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ॥४॥ त्रिगुणातीत विधारक परितो देहि सुभक्तिं ।

करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।५।। शरणं कारण भावन भव मे तात सदालम् । करुणापूर्ण वरप्रदचरितं ज्ञापय मे ते ।।६।। मरणप्राणद पालक जगदीशाव सुभक्तिम् । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।७।। तरुणादित्यसवर्णकचरणाब्जामलकीर्ते । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।८।। सलिलप्रोत्थ सरागकमणिवर्णोच्चनखादे । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।९।। खजतूणीनिभ पावन वरजंघामितशक्ते । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१०।। इभहस्तप्रभ शोभन परमोरुस्थरमाले । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।११।। असनोत्फुल्लसुपुष्पकसमवर्णावरणान्ते । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१२।। शतमोद्भवसुन्दरवरपद्मोत्थितनाभे । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१३।। जगदागूहकपल्लवसमकुक्षे शरणादे । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१४।। जगदम्बामल-सुन्दरगृहवक्षोवरयोगिन् । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१५।। दितिजान्तप्रदचक्रधरगदायुग्वरबाहो । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१६।। परमज्ञानमहानिधिवदनश्रीरमणेन्दो । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१७।। निखिलाघौघविनाशकपरसौख्यप्रददृष्टे । करुणापूर्ण वरप्रद चरितं ज्ञापय मे ते ।।१८।। परमानन्दसुतीर्थ (सु)मुनिराजो हरिगाथां । कृतवान्नित्यसुपूर्णकपरमानन्दपदैषी ।।१९।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे दशमोऽध्यायः ।। १०।।**

ऊदीर्णमजरं दिव्यममृतस्यन्द्यधीशितुः । आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ।।१।। संर्ववेदपदोद्गीतमिन्दिरावासमुत्तमम् । आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ।।२।। सर्वदेवादिदेवस्य विधारितमहत्तमः । आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ।।३।। उदारमादरान्नित्यमनिन्द्यं

सुन्दरीपतेः। आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥४॥ इन्दीवरोदरनिभं सुपूर्णं वादिमोहदं। आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥५॥ दातृ सर्वामरैश्वर्यविमुक्त्यादेरहो वरं। आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥६॥ दूराद्दूरतरं यत्तु तदेवान्तिकमन्तिकात्। आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥७॥ पूर्णसर्वगुणैकार्णमनाद्यन्तं सुरेशितुः। आनन्दस्य पदं वन्दे ब्रह्मेन्द्राद्यभिवन्दितम् ॥८॥ आनन्दतीर्थमुनिना हरेरानन्दरूपिणः। कृतं स्तोत्रमिदं पुण्यं पठन्नानन्दतामियात् ॥९॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे एकादशोऽध्यायः॥११॥**

आनन्द मुकुन्द अरविन्दनयन। आनन्दतीर्थपरानन्दवरद ॥१॥ सुन्दरीमन्दिर गोविन्द वन्दे। आनन्दतीर्थपरानन्दवरद ॥२॥ चन्द्रसुरेन्द्र-सुवन्दित वन्दे। आनन्दतीर्थपरानन्दवरद ॥३॥ चन्द्रकमन्दिरनन्दक वन्दे। आनन्दतीर्थ परानन्दवरद ॥४॥ वृन्दारकवृन्दसुवन्दित वन्दे। आनन्दतीर्थ परानन्दवरद ॥५॥ मन्दारसूनसुचर्चित वन्दे। आनन्दतीर्थ परानन्दवरद ॥६॥ इन्दिरानन्दक सुन्दर वन्दे। आनन्दतीर्थपरानन्दवरद ॥७॥ मन्दिरस्यन्दनस्यन्दक वन्दे। आनन्दतीर्थपरानन्दवरद ॥८॥ आनन्दचन्द्रिकास्यन्दक वन्दे। आनन्दतीर्थपरानन्दवरद ॥९॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते द्वादशस्तोत्रे द्वादशोऽध्यायः॥१२॥**

**॥ इति श्रीमद्द्वादशस्तोत्रं सम्पूर्णम् ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



॥श्री ॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः

# ॥ कृष्णामृतमहार्णवः ॥

॥ ॐ ॥ अर्चितः संस्मृतो ध्यातः कीर्तितः कथितः श्रुतः । यो ददात्यमृतत्वं हि स मां रक्षतु केशवः ॥१॥ तापत्रयेण सन्तप्तं यदेतदखिलं जगत् । वक्ष्यामि शान्ततो तस्य कृष्णामृतमहार्णवम् ॥२॥ ते नराः पशवो लोके किं तेषां जीवने फलम् । यैर्न लब्धा हरेर्दीक्षा नार्चितो वा जनार्दनः ॥३॥ संसारेऽस्मिन्महाघोरे जन्मरोगभयाकुले । अयमेको महाभागः पूज्यते यदधोक्षजः ॥४॥ स नाम सुकृती लोके कुलं तेनाभ्यलङ्कृतम् । आधारः सर्वभूतानां येन विष्णुः प्रसादितः ॥५॥ यज्ञानां तपसां चैव शुभानां चैव कर्मणम् । तद्विशिष्टफलं नृणां सदैवाराधनं हरेः ॥६॥ कलौ कलिमलध्वंसि सर्वपापहरं हरिम् । येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ॥७॥ नास्ति श्रेयस्तमं नृणां विष्णोराराधनान्मुने । युगेऽस्मिंस्तामसे लोके सततं पूज्यते नृभिः ॥८॥ अर्चिते सर्वदेवेशे शङ्खचक्रगदाधरे । अर्चिताः सर्वदेवाः स्युर्यतः सर्वगतो हरिः ॥९॥ स्वर्चिते सर्वलोकेशे सुरासुरनमस्कृते । केशवे कंसकेशिघ्ने न याति नरकं नरः ॥१०॥ सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः । मुक्तिभागी निरातङ्की विष्णुलोके चिरं वसेत् ॥११॥

शंकरः (उवाच) ॥ सकृदभ्यर्चितो येन देवदेवो जनार्दनः । यत्कृतं तत्कृतं तेन सम्प्राप्तं परमं पदम् ॥१२॥ सकृदभ्यर्चितो येन हेलयाऽपि नमस्कृतः । स याति परमं स्थानं यत्सुरैरपि दुर्लभम् ॥१३॥

नारदः ॥ समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः । साक्षाद्भगवतो विष्णोः पूजनं जन्मनः फलम् ॥१४॥

पुलस्त्यः ॥ भक्त्या दूर्वाङ्कुरैः पुम्भिः पूजितः पुरुषोत्तमः । हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम् ॥१५॥ विधिना देवदेवेशः शङ्खचक्रधरो हरिः । फलं ददाति सुलभं सलिलेनापि पूजितः ॥१६॥ नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥१७॥

धर्मः॥ द्रव्याणामप्यभावे तु सलिलेनापि पूजितः । यो ददाति स्वकं स्थानं स त्वया किं न पूजितः ॥१८॥ नारसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः । स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः ॥१९॥

ब्रह्मा ॥ गर्भस्थिता मृता वापि मुषितास्ते सुदूषिताः । न प्राप्ता यैर्हरेर्दीक्षा सर्वदुःखविमोचनी ॥२०॥

मार्कण्डेयः ॥ सकृदभ्यर्चितो येन देवदेवो जनार्दनः । यत्कृत्यं तत्कृतं तेन सम्प्राप्तं परमं पदम् ॥२१॥ धर्मार्थकाममोक्षाणां नान्योपायस्तु विद्यते । सत्यं ब्रवीमि देवेश हृषीकेशार्चनादृते ॥२२॥ तस्य यज्ञवराहस्य विष्णोरमिततेजसः । प्रणामं ये प्रकुर्वन्ति तेषामपि नमोनमः ॥२३॥

मरीचिः ॥ अनाराधितगोविन्दैर्नरैः स्थानं नृपात्मज । न हि सम्प्राप्यते श्रेष्ठं तस्मादाराधयाच्युतम् ॥२४॥

अत्रिः ॥ परः पराणां पुरुषस्तुष्टो यस्य जनार्दनः । स चाप्नोत्यक्षयं स्थानमेतत्सत्यं मयोदितम् ॥२५॥

अङ्गिराः ॥ यस्यान्तः सर्वमेवेदमच्युतस्याव्ययात्मनः । तमाराधय गोविन्दं स्थानमग्र्यं यदीच्छसि ॥२६॥

पुलस्त्यः॥ परं ब्रह्म परं धाम योऽसौ ब्रह्म सनातनम् । तमाराध्य हरिं यान्ति मुक्तिमप्यतिदुर्लभाम् ॥२७॥

पुलहः ॥ ऐन्द्रमिन्द्रः परं स्थानं यमाराध्य जगत्पतिम् । प्राप यज्ञपतिं विष्णुं तमाराधय सुव्रत ॥२८॥ प्राप्नोत्याराधिते विष्णौ मनसा यद्यदिच्छति। त्रैलोक्यान्तर्गतं स्थानं किमु लोकोत्तरोत्तरम् ॥२९॥ ये स्मरन्ति सदा विष्णुं शङ्खचक्रगदाधरम् । सर्वपापविनिर्मुक्ताः परं ब्रह्म विशन्ति ते ॥३०॥ ततोऽनिरुद्धं देवेशं प्रद्युम्नं च ततः परम् । ततः सङ्कर्षणं देवं वासुदेवं परात्परम् ॥३१॥ वासुदेवात्परः नास्ति इति वेदान्तनिश्चयः । वासुदेवं प्रविष्टानां पुनरावर्तनं कुतः ॥३२॥

आत्रेयः ॥ यो यानिच्छेन्नरः कामान्नारी वा वरवर्णिनी । तान् समप्नोति विपुलान् समाराध्य जनार्दनम् ॥३३॥

ब्रह्मा ॥ बाहुभ्यां सागरं तर्तुं क इच्छति पुमान् भुवि । वासुदेवमनाराध्य को मोक्षं गन्तुमिच्छति ॥३४॥

कौशिकः ॥ अनाराधितगोविन्दा ये नरा दुःखभागिनः । आराध्य वासुदेवं स्युर्नित्यानन्दैकभागिनः ॥३५॥

शंकर ॥ कृते पापेऽनुतापो वै यस्य पुंसः 'प्रजायते । प्रायश्चित्तं तु तस्योक्तं हरिसंस्मरणं परम् ॥३६॥ (नाम्नोऽस्ति यावती शक्तिः पापनिर्हरणे

हरेः । तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥३६॥)

ब्रह्मा ॥ न ह्यपुण्यवतां लोके मूढानां कुटिलात्मनाम् । भक्तिर्भवति गोविन्दे स्मरणं कीर्तिनं तथा ॥३७॥ तदैव पुरुषो मुक्तो जन्म दुःखजरादिभिः । जितेन्द्रियो विशुद्धात्मा यदैव स्मरते हरिम् ॥३८॥ प्राप्ते कलियुगे घोरे धर्मज्ञानविवर्जिते । न कश्चित्स्मरते देवं कृष्णं कलिमलापहम् ॥३९॥ न कलौ देवदेवस्य जन्मदुःखापहारिणः । करोति मर्त्यो मूढात्मा स्मरणं कीर्तनं हरेः ॥४०॥ ये स्मरन्ति सदा विष्णुं विशुद्धेनान्तरात्मना । ते प्रयान्ति भयं त्यक्त्वा विष्णुलोकमनामयम् ॥४१॥ गर्भजन्मजरारोगदुःखसंसारबन्धनैः । न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् ॥४२॥ यममार्गं महाघोरं नरकाणि यमं तथा । स्वप्नेऽपि नैव पश्येत यः स्मरेद्गरुडध्वजम् ॥४३॥ हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः । पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ॥४४॥ गोविन्दस्मरणं पुंसां पापराशिमहाचलम् । असंशयं दहत्याशु तूलराशिमिवानलः ॥४५॥

अगस्त्यः ॥ स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरः । शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥४६॥ कृष्णे रताः कृष्णमनुस्मरन्ति तद्भाविता स्तद्गतमानसाश्च । भिन्नेऽपि देहे प्रविशन्ति कृष्णं हविर्यथा मन्त्रहुतं हुताशे ॥४७॥ सा हानिस्तन्महच्छिद्रं सा चान्धजडमूकता । यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ॥४८॥ नारायणो नाम नरो नराणां प्रसिद्धचोरः कथितः पृथिव्याम् । अनेकजन्मार्जितपापसञ्चयं हरत्यशेषं स्मृतमात्र एव ॥४९॥ यस्य संस्मरणादेव वासुदेवस्य चक्रिणः । कोटिजन्मार्जितं पापं तत्क्षणादेव नश्यति ॥५०॥ किं तस्य बहुभिस्तीर्थैः किं तपोभिः किमध्वरैः । यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥५१॥ ये मानवा विगतरागपरावरज्ञा नारायणं सुरगुरुं सततं स्मरन्ति । ध्यानेन तेन हतकिल्बिषचेतनास्ते मातुः पयोधररसं न पुनः पिबन्ति ॥५२॥ हे चित्त चिन्तयस्वेह वासुदेवमहर्निशम् । नूनं यश्चिन्तितः पुंसां

हन्ति संसारबन्धनम् ॥५३॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥५४॥ स्मृते सकलकल्याणभाजनं यत्र जायते। पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ ५५॥ वेदेषु यज्ञेषु तपस्सु चैव दानेषु तीर्थेषु व्रतेषु यच्च। इष्टेषु पूर्तेषु च यत्प्रदिष्टं पुण्यं स्मृते तत्स्वलु वासुदेवे ॥५६॥ आराध्यैव नरो विष्णुं मनसा यद्यदिच्छति। फलं प्राप्नोति विपुलं भूरि स्वल्पमथापि वा ॥५७॥ यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् । मैत्रैयाशेषपापानां धातूनामिव पावकः ॥५८॥ कलिकल्पषमत्युग्रं नरकार्तिप्रदं नृणम्। प्रयाति विलयं सद्यः सकृत्सङ्कीर्तितेऽच्युते ॥५९॥ अनायासेन चायान्ति मुक्तिं केशवसंश्रिताः । तद्विघाताय जायन्ते शक्राद्याः परिपन्थिनः ॥६०॥ चतुःसागरमासाद्य जम्बूद्वीपोत्तमे क्वचित् । न पुमान् केशवादन्यः सर्वपापचिकित्सकः ॥६१॥ यदभ्यर्च्य हरिं भक्त्या कृते वर्षशतैरपि । फलं प्राप्नोति विपुलं कलौ सङ्कीर्त्य केशवम् ॥६२॥ क्षीयते तु यदा धर्मः प्राप्ते घोरे कलौ युगे। तदा न कीर्तयेत्कश्चिन्मुक्तिदं देवमच्युतम् ॥६३॥ अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥६४॥ नारायणेति मन्त्रोऽस्ति वागस्ति वशवर्तिनी । तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥६५॥ आर्ता विषण्णाः शिथिलाश्च भीता घोरेषु च व्याधिषु वर्तमानाः । सङ्कीर्त्य नारायणशब्दमात्रं विमुक्तदुःखाः सुखिनो भवन्ति ॥६६॥

कौशिकः ॥ सकृदुच्चरितं यैस्तु कृष्णेति न विशन्ति ते । गर्भागारगृहं मातुर्यमलोकं च दुःसहम् ॥६७॥ क्व नाकपृष्ठगमनं पुनरावृत्ति लक्षणम् । क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम् ॥६८॥ बुध्द्या बुद्ध्वाऽभ्यसेदेतद् हरिरित्यक्षरद्वयम् । स्मरणात्कीर्तनाद्यस्य न पुनर्जायते भुवि ॥६९॥ हे जिह्वे मम निःस्नेहे हरिं किं नानुभाषसे । हरिं वदस्व कल्याणि संसारोदधिनौर्हरिः ॥७०॥ असारे खलु संसारे सारात्सारतरो हरिः । पुण्यहीना न विन्दन्ति सारङ्गाश्च यथा जलम् ॥७१॥ कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण किम् । जिह्वाग्रे

वर्तते यस्य हरिरित्यक्षरद्वयम् ॥७२॥

ब्रह्मा ॥ असारे खलु संसारे सारमेकं निरूपितम् । समस्तलोकनाथस्य सारमाराधनं हरेः ॥७३॥ सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पणम् । तावेव केवलो श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥७४॥ यस्तु विष्णुपरो नित्यं दृढभक्तिर्जितेन्द्रियः । स्वगृहेऽपि वसन् याति तद्विष्णोः परमं पदम् ॥७५॥

शंकरः ॥ साधु साधु महाभाग साधु दानवनाशन । यन्मां पृच्छसि धर्मज्ञ केशवाराधनं प्रति ॥७६॥ निमिषं निमिषार्धं वा मुहूर्तमपि भार्गव । नादग्धाशेषपापानां भक्तिर्भवति केशवे ॥७७॥ किं तेन मनसा कार्यं यन्न तिष्ठति केशवे । मनो मुक्तिफलावाप्तौ कारणं सुप्रयोजितम् ॥७८॥ रोगो नाम न सा जिह्वा यया न स्तूयते हरिः । गर्तो नाम न तौ कर्णौ याभ्यां तत्कर्म न श्रुतम् ॥७९॥ नूनं तत्कण्ठशालूकमथवाऽप्युपजिह्विका । रोगो नाम न सा जिह्वा या न वक्ति हरेर्गुणान् ॥८०॥ भारभूतैः करैः कार्यं किं तस्य नृपशोर्द्विज । यैर्हि न क्रियते विष्णोर्गृहसम्मार्जनादिकम् ॥८१॥ चरणौ तौ तु सफलौ केशवालयगामिनौ । ते च नेत्रे महाभाग याभ्यां संदृश्यते हरिः ॥८२॥ किं तस्य चरणैः कार्यं वृथा सञ्चरणैर्द्विज । यैर्हि न व्रजते जन्तुः केशवालयदर्शने ॥८३॥ वेदवेदाङ्गविदुषां मुनीनां भावितात्मनाम् । ऋषित्वमपि धर्मज्ञ विज्ञेयं तत्प्रसादजम् ॥८४॥ विचित्ररत्नपर्यङ्के महाभोगे च भोगिनः । रमन्ते नाकिरामाभिः केशवस्मरणात्फलम् ॥८५॥

अश्वमेधसहस्राणां यः सहस्रं समाचरेत् । नासौ तत्फलमाप्नोति तद्भक्तैर्यदवाप्यते ॥८६॥ रेरे मनुष्याः पुरुषोत्तमस्य करौ न कस्मान्मुकुलीकुरुध्वम् । क्रियाजुषां को भवतां प्रयासः फलं हि यत्तत्पदमच्युतस्य ॥८७॥ विष्णोर्विमानं यः कुर्यात्सकृद्भक्त्या प्रदक्षिणम् । अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥८८॥ प्रदक्षिणं तु यः कुर्याद्धरिं भक्तिसमन्वितः ।

हंसयुक्तविमानेन विष्णोर्लोकं स गच्छति ॥८९॥ तीर्थकोटिसहस्राणि व्रतकोटिशतानि च । नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥९०॥ उरसा शिरसा दृष्ट्या मनसा वचसा तथा । पभ्द्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥९१॥ शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गपाणये । शतजन्मार्जितं पापं नश्यत्येव न संशयः ॥९२॥ संसारार्णवमग्नानां नराणां पापकर्मणाम् । नान्योद्धर्ता जगन्नाथं मुक्त्वा नारायणं प्रभुम् ॥९३॥ रेणुकुण्ठितगात्रस्य कणा यावन्ति भारत । तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥९४॥

पावनं विष्णुनैवेद्यं सुभोज्यमृषिभिः स्मृतम् । अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥९५॥ कोटयैन्दवसहस्रैस्तु मासोपोषणकोटिभिः । तत्फलं लभते पुम्भिर्विष्णोर्नैवेद्यभक्षणात् ॥९६॥ विष्णोर्नैवेद्यशेषेण यो भुनक्ति दिनेदिने । सिक्थे सिक्थे लभेत्पुण्यं चान्द्रायणशताधिकम् ॥९७॥ नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् । योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥९८॥ त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः । समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥९९॥ षण्मासफलदा गोदा वत्सरस्य तु जाह्नवी । विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ॥१००॥ गङ्गाप्रयागगयपुष्करनैमिषाणि संसेवितानि बहुशः कुरुजाङ्गलानि । कालेन तीर्थसलिलानि पुनन्ति पापं पादोदकं भगवतः प्रपुनाति नद्यः ॥१०१॥ यानि कानि च तीर्थानि ब्रह्माण्डान्तर्गतानि च । विष्णुपादोदकस्यैताः कलां नार्हन्ति षोडशीम् ॥१०२॥

स्नात्वा पादोदकं विष्णोः पिबन् शिरसि धारयेत् । सर्वपापविनिर्मुक्तो वैष्णवीं सिद्धिमाप्नुयात् ॥१०३॥ यथा पादोदकं पुण्यं निर्माल्यं चानुलेपनम् । नैवेद्यं धूपशेषश्च आरार्तिश्च तथा हरेः ॥१०४॥ तुलस्यास्तु रजोजुष्टं नैवेद्यस्य च भक्षणम् । निर्माल्यं शिरसा धार्यं महापातकनाशनम् ॥१०५॥ भक्त्या वा यदि वाऽभक्त्या चक्राङ्कितशिलां प्रति । दर्शनं स्पर्शनं वापि सर्वपापप्रणाशनम् ॥१०६॥ शालग्रामशिला यत्र तत्र सन्निहितो हरिः ।

तत्र स्नानं च दानं च वाराणस्याः शताधिकम् ॥१०७॥ म्लेच्छदेशेऽशुचौ वापि चक्राङ्को यत्र तिष्ठति । योजनानि तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥१०८॥ शालग्रमोद्भवो देवः शैलं चक्राङ्कमण्डलम् । यत्रापि नीयते तत्र वाराणस्याः शताधिकम् ॥१०९॥ शालग्रामोद्भवो देवो देवो द्वारवतीभवः । उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥११०॥ हरिणा मुक्तिदानीह मुक्तिस्थानानि सर्वशः । स यस्य सर्वभावेषु तस्य तैः किं प्रयोजनम् ॥१११॥ हरिर्याति हरिर्याति दस्युव्याजेन यो वदेत् । सोऽपि सद्गतिमाप्नोति गतिं सुकृतिनो यथा ॥११२॥

वासुदेवं परित्यज्य योऽन्यं देवमुपासते । त्यक्त्वाऽमृतं स मूढात्मा भुङ्क्ते हालाहलं विषम् ॥११३॥ त्यक्त्वाऽमृतं यथा कश्चिदन्यपानं पिबेन्नरः । तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥११४॥ स्वधर्मं तु परित्यज्य परधर्मं चरेद्यथा । तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥११५॥ यथा गङ्गोदकं त्यक्त्वा पिबेत्कूपोदकं नरः । तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥११६॥ गां च त्यक्त्वा स मूढात्मा गर्दभीं वन्दते यथा । तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥११७॥ स्वमातरं परित्यज्य श्वपाकीं वन्दते यथा । तथा हरिं परित्यज्य योऽन्यं दैवमुपासते ॥११८॥

वासुदेवं परित्यज्य योंऽन्यं दैव मुपासते । तृषितो जाह्नवी तीरे कूपं खनति दुर्मतिः ॥११९॥ यावत्स्वस्थमिदं पिण्डं नीरुजं करणान्वितम् । तावत्कुरुष्वात्महितं पश्चात्तापेन तप्यसे ॥१२०॥ यावत्स्वास्थ्यं शरीरेषु करणेषु च पाटवम् । तावदर्चय गोविन्दमायुष्यं सार्थकं कुरु ॥१२१॥ स्मर्यतां तु हृषीकेशो हृषीकेषु दृढेषु च । अदृढेषु हृषिकेषु हृषीकेशं स्मरन्ति के ॥१२२॥ यावच्चिन्तयते जन्तुर्विषयान्विषसन्निभान् । तावच्चेत्स्मरते विष्णुं को न मुच्येत बन्धनात् ॥१२३॥ यावत्प्रलपते जन्तुर्लोकवातादिभिः सदा । तावच्चेद्वदते विष्णुं को न मुच्येत बन्धनात् ॥१२४॥

श्रीसूतः ॥ ज्ञात्वा विप्रैस्तिथिं सम्यक्दैवज्ञैः समुदीरित्ताम् । कर्तव्य उपवासस्तु अन्यथा नरकं व्रजेत् ॥१२५॥ क्षये वाप्यथवा वृद्धौ सम्प्राप्ते वा दिनक्षये । उपोष्या द्वादशी पुण्या पूर्वविद्धां परित्यजेत् ॥१२६॥ पूर्वविद्धां प्रकुर्वाणो नरो धर्मान्निकृन्तति । सन्ततेस्तु विनाशाय सम्पदो हरणाय च ॥१२७॥ कलावेधे तु विप्रेन्द्र दशम्यैकादशीं त्यजेत् । सुराया बिन्दुना स्पृष्टं गङ्गाम्भ्य इव सन्त्यजेत् ॥१२८॥ श्वदृतौ पञ्चगव्यं च दशम्या दूषितां त्यजेत् । एकादशीं द्विजश्रेष्ठ पक्ष्ययोरुभयोरपि ॥१२९॥ तस्माद्विप्र न विद्धा हि कर्तव्यैकादशी क्वचित् । विद्धा हन्ति पुरापुण्यं श्राद्धं च वृषलीपतिः ॥१३०॥ जप्तं दत्तं हुतं स्नातं तथा पूजा कृता हरेः । तत्सर्वं विलयं याति तमः सूर्योदये यथा ॥१३१॥ एकादश्यां यदा ब्रह्मन् दिनक्षयतिथिर्भवेत् । उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥१३२॥ प्रतिपत्प्रभृतयः सर्वा उदयादुदयाद्रवेः । सम्पूर्णा इति विज्ञेया हरिवासरवर्जिताः ॥१३३॥ अरुणोदयकाले तु दशमी यदि दृश्यते । पापमूलं तदा ज्ञेयमेकादश्युपवासनम् ॥१३४॥

अरुणोदयवेलायां दशमी यदि दृश्यते । न तत्रैकादशी कार्या धर्मकामार्थनाशिनी ॥१३५॥ चतस्रो घटिकाः प्रातररुणोदय उच्यते । यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः ॥१३६॥ उदयात् प्राग्यदा विप्रा मुहूर्तद्वयसंयुता । सम्पूर्णैकादशीनाम तत्रैवोपवसेद्गृही ॥१३७॥ उदयात्प्राक् त्रिघटिकाव्यापिन्येकादशी यदा । सन्दिग्धैकादशी नाम वर्ज्या धर्मार्थनाशिनी ॥१३८॥ पुत्रपौत्रप्रवृध्द्यर्थं द्वादश्यामुपवासयेत् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥१३९॥ उदयात्प्राक् द्विघटिकाव्यापिन्येकादशी यदा । सङ्कीर्णैकादशी नाम वर्ज्या धर्मार्थकाङ्क्षिभिः ॥१४०॥ पुत्रराज्य प्रवृध्द्यर्थं द्वादश्यामुपवासनम् । तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम् ॥१४१॥ दशमीशेषसंयुक्ता गान्धार्या समुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥१४२॥ अपीषद्दशमीविद्धा सदा तां परिवर्जयेत् । सुराबिन्दुसमायुक्तां प्रवदन्ति मनीषिणः ॥१४३॥

बह्वागमविरोधेषु ब्राह्मणेषु विवादिषु। उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥१४४॥ एकादश्यां तु विद्धायां सम्प्राप्ते श्रवणे तथा। उपोष्या द्वादशी पुण्या पक्षयोरुभयोरपि ॥१४५॥ उपरागसहस्त्राणि व्यतीपातायुतानि च। अमालक्षं तु द्वादश्याः कलां नार्हन्ति षोडशीम् ॥१४६॥ शुद्धापि द्वादशी ग्राह्या परतो द्वादशी यदि। विषं तु दशमी ज्ञेयामृऽतं चैकादशीतिथिः ॥१४७॥ विषप्रधाना वर्ज्या साऽमृता ग्राह्या प्रयत्नतः। द्वादश्यां भोजनं चैव विद्धायां हर्युपोषणम् ॥१४८॥ यः कुर्यान्मन्दबुद्धित्वान्निरयं सोऽधिगच्छति। यानि कानि च वाक्यानि विद्धोपोषपराणि च ॥१४९॥

धनदार्चापराणि स्युर्वैष्णवी न दशायुता। अथवा मोहनार्थाय मोहिन्या भगवान्हरिः ॥१५०॥ अर्थितः कारयामास व्यासरूपी जनार्दनः। धनदार्चाविवृद्ध्यर्थं महावित्तलयस्यच॥ असुराणां मोहनार्थं पाषण्डानां विवृद्धये ॥१५१॥ आत्मस्वरूपाविज्ञप्त्यै स्वलोकाप्राप्तये तथा। एवं विद्धां परित्यज्य द्वादश्यामुपवासयेत् ॥१५२॥ कोटिजन्मार्जितं पापमेकयैव विनश्यति ततः कोटिगुणं चापि निषिद्धस्येतरैर्जनैः ॥१५३॥ यदनादिकृतं पापं यदूर्ध्वं यत्करिष्यति। तत्सर्वं विलयं याति परेषामुपवासनात् ॥ १५४॥ न च तस्मात्पियतमः केशवस्य ममापि च। एकादश्यां ह्यवेधे तु द्वादशीं न परित्यजेत् ॥१५५॥ पारणे मरणे चैव तिथिस्तात्कालिकी स्मृता। ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा ॥१५६॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो भर्तृमती तथा। अभर्तृका तथान्ये च सूतवैदेहिकादयः ॥१५७॥ एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। एकादश्यां तु यो भुङ्क्ते मोहेनावृतचेतसा ॥१५८॥ शुक्लायामथ कृष्णायां निरयं याति स ध्रुवम्। विवेचयति यो मोहाच्छुक्ला कृष्णेति पापकृत् ॥१५९॥ एकादशीं स वै याति निरयं नात्रसंशयः। यथा गौर्नैव हन्तव्या शुक्ला कृष्णेति भामिनि ॥१६०॥ एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। यानि कानि च वाक्यानि कृष्णैकादशिवर्जने ॥१६१॥ भरण्यादिनिषेधे च तानि

काम्यफलार्थिनाम् । कामिनोऽपि हि सिद्ध्यर्थं कुर्युरेवोपवासनम् ॥१६२॥ प्रीणनार्थं हरेर्नित्यं न तु काम्यव्यपेक्षया । तस्माच्छुक्लामथो कृष्णां भरण्यादियुतामपि ॥१६३॥ प्रत्यवायनिषेधार्थामुपवासीत नित्यशः । प्रीणनार्थं हरेश्चापि विष्णुलोकस्य चाप्तये ॥१६४॥

कला वार्धकला वापि परतो द्वादशी यदि । द्वादशद्वादशीर्हन्ति पूर्वेद्युः पारणे कृते ॥१६५॥ अतिरिक्ता द्वादशी चेद्यस्तां नोपोषयेद्यदि । द्वादशद्वादशीर्हन्ति द्वादशी चातिलङ्घिता ॥१६६॥ द्वादश्यामतिरिक्तायां यो भुङ्क्ते पूर्ववासरे । द्वादशद्वादशीर्हन्ति द्वादशीं न परित्यजेत् ॥१६७॥ द्वादशीं श्रवणोपेतां यो नोपोष्यात्सुमन्दधीः । पञ्चसंवत्सरकृतं पुण्यं तस्य विनश्यति ॥१६८॥ एकादशीमुपोष्याथ द्वादशीमप्युपोषयेत् । न तत्र विधिलोपः स्यादुभयोर्देवता हरिः ॥१६९॥ अल्पायामपि विप्रेन्द्र पारणं तु कथं भवेत् । पारयित्वोदकेनापि भुञ्जानो नैव दुष्यति ॥ अशितानशिता यस्मादापो विद्वद्भिरीरिताः ॥१७०॥ अम्भसा केवलेनैव करिष्ये व्रतपारणम् । तद्विशिष्टं मुनिप्रोक्तमशितानशितं च यत् ॥१७१॥

न काशी न गया गङ्गा न रेवा न च पुष्करम् । न चापि कौरवं क्षेत्रं तुल्यं भूप हरेर्दिनात् ॥१७२॥ अश्वमेधसहस्राणि वाजपेयशतानि च । एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥१७३॥ एकादशीसमुत्थेन वह्निना पातकेन्धनम् । भस्मीभवति राजेन्द्र अपि जन्मशतोद्भवम् ॥१७४॥ नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते । यादृशं पद्मनाभस्य दिनं पातकहानिदम् ॥१७५॥ तावत्पापानि देहेस्मिंस्तिष्ठन्ति मनुजाधिप यावन्नोपोषयेज्जन्तुः पद्मनाभदिनं शुभम् ॥१७६॥ एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो । एकादश्युपवासेन तत्सर्वं विलयं व्रजेत् ॥ १७७॥ एकादशीसमं किञ्चित्पवित्रं न हि विद्यते । व्याजेनापि कृता राजन्न दर्शयति भास्करिम् ॥१७८॥

श्रीव्यासः ॥ अन्नं निवेदयेन्मह्यं प्राप्ते मद्वासरे शुभे । तस्यापि

नरकप्राप्तिः किं पुनर्भोजने कृते ॥१७९॥ स ब्रह्महा स गोघ्नश्च स स्तेनो गुरुतल्पगः । एकादश्यां तु भुञ्जानः पक्षयोरुभयोरपि ॥१७०॥ वरं स्वमातृगमनं वरं गोमांसभक्षणम् । वरं हत्या सुरापानमेकादश्यन्नभक्षणात् ॥१८१॥ एकादशीदिने पुण्ये भुञ्जते ये नराधमाः । अवलोक्य मुखं तेषामादित्य-मवलोकयेत् ॥१८२॥ पृथिव्यां यानि पापानि ब्रह्महत्यादिकानि च। अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे ॥१८३॥

रुग्माङ्गदः॥ अष्टवर्षाधिको यस्तु ह्यशीतिर्न हि पूर्यते। यो भुङ्क्ते मानवः पापो विष्णोरहनि चागते ॥१८४॥ पिता वा यदि वा पुत्रो भार्या वाऽपि सुहृज्जनः । पद्मनाभदिने भङ्क्ते निग्राह्यो दस्युवद्भवेत् ॥१८५॥

ब्रह्मा ॥ उपोष्य द्वादशीं पुण्यां सर्वपापक्षयप्रदाम्। न पश्यन्ति यमं वापि नरकाणि न यातनाम् ॥१८६॥

शंकरः ॥ रटन्तीह पुराणानि भूयोभूयो वरानने । न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे ॥१८७॥ द्वादशी न प्रमोक्तव्या यावदायुः प्रवर्तते। अर्चनीयो हृषीकेशो विशुद्धेनान्तरात्मना ॥१८८॥ भक्त्या ग्राह्यो हृषीकेशो न धनैर्धरणीसुराः । भक्त्या सम्पूजितो विष्णुः फलं धत्ते समीहितम् ॥१८९॥ जलेनापि जगन्नाथः पूजितः क्लेशनाशनः । परितोषं प्रयात्याशु तृषार्तस्तु यथा जलैः ॥१९०॥ आसीनस्य शयानस्य तिष्ठतो व्रजतोऽपि वा । रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ॥१९१॥ करावलम्बनं देहि श्रीकृष्ण कमलेक्षण। भवपङ्कार्णवे घोरे मज्जतो मम सर्वदा ॥१९२॥ सर्वगश्चैव सर्वात्मा सर्वावस्थासु चाच्युत । रमस्व पुण्डरीकाक्ष नृसिंह हृदये मम ॥१९३॥ (एकादश्यां न भुञ्जीत न सुरां वा पिबेत्क्वचित्। ब्राह्मणो नैव हन्तव्य इत्येषा वैदिकी स्मृतिः) ॥१९४॥ त्राहि त्राहि जगन्नाथ वासुदेवाच्युताव्यय । मां

समुद्धर गोविन्द दुःखसंसारसागरात् ॥१९५॥ एतत्पुण्यमिदं गुह्यं पवित्रं पापनाशनम् । आयुष्यं च यशस्यं च धन्यं दुःस्वप्ननाशनम् ॥१९६॥ कलौ पापं कियन्मात्रं हत्यास्तेयादिसम्भवम् । स्मृते मनसि गोविन्दे दह्यते तूलराशिवत् ॥१९७॥ कलौ केशवभक्तानां न भयं विद्यते क्वचित् । स्मृते सङ्कीर्तिते ध्याते संक्षयं याति पातकम् ॥१९८॥

अध्येतव्यमिदं शास्त्रं श्रोतव्यमनसूयया । भक्तेभ्यश्च प्रदातव्यं धार्मिकेभ्यः पुनःपुनः ॥१९९॥ अधीयाना इदं शास्त्रं विष्णो र्माहात्म्यमुत्तमम्। सर्वपापविनिर्मुक्ताः प्राप्नुवन्ति परं पदम् ॥२००॥ श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च गच्छति ॥२०१॥ तस्मादिदं सदा सेव्यं श्रोतव्यं च सदैव हि । कुतर्कदावदग्धेभ्यो न दातव्यं कथञ्चन ॥२०२॥ संसारविषपानेन ये मृताः प्राणिनो भुवि । अमृताय स्मृतस्तेषां कृष्णामृतमहार्णवः ॥२०३॥ क्लिन्नं पादोदकेनैव यस्य नित्यं कलेवरम् । तीर्थकोटिसहस्त्रैस्तु स्नातो भवति प्रत्यहम् ॥२०४॥ तीर्थकोटिसहस्त्रैस्तु सेवितैः किं प्रयोजनम् । तोयं यदि पिबेन्नित्यं शालग्रमाशिलाच्युतम् ॥२०५॥ शालग्रमाशिलास्पर्शं ये कुर्वन्ति दिनेदिने । वाञ्छन्ति करसंस्पर्शं तेषां देवाः सवासवाः ॥२०६॥ दुःसहो नारको वह्निर्दुःसहा यमकिङ्कराः । विषमश्चान्तकपथः प्रेतत्वं चातिदारुणम् ॥२०७॥ सञ्चिन्त्य मनसाप्येवं पातकाद्विनिवर्तयेत् । स्मरणं कीर्तिनं विष्णोः सदैव न परित्यजेत् ॥२०८॥

अच्युतानन्तगोविन्दनामोच्चारणभेषजात् । नश्यन्ति सकलाः रोगाः सत्यं सत्यं वदाम्यहम् ॥२०९॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥२१०॥ एवं ब्रह्मादयो देवा ऋषयश्च तपोधनाः । कीर्तियन्ति परं श्रेष्ठं देवं नारायणं प्रभुम् ॥२११॥ किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः । यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥२१२॥ नित्योत्सवो भवेत्तेषां नित्यश्रीर्नित्यमङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥२१३॥ जीवंश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु ॥२१४॥ दशावराणां देहानां

कारणानि करोत्ययम् । स्त्री वाप्यनूनदशकं देहं मानुषमार्जयेत् ॥२१५॥ चतुर्दशोर्ध्वजीवीनि संसारश्चादिवर्जितः । अतोऽवित्त्वा परं देवं मोक्षाशा का महामुने ॥२१६॥ आचतुर्दशमाद्वर्षात्पुरुषो नियमेन तु । दशावराणां देहानां कारणानि करोत्ययम् ॥२१७॥ अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति । समानां विषमा पूजा विषमाणां समा तथा ॥२१८॥ क्रियते येन देवोऽपि स्वपदाद् भृश्यते हि सः । वित्तंबन्धुर्वयः कर्म विद्या चैव तु पञ्चमी । एतानि मान्यस्थानानि गरीयो ह्युत्तरोत्तरम् ॥२१९॥ गुणानुसारिणीं पूजां समां दृष्टिं च यो नरः । सर्वभूतेषु कुरुते तस्य विष्णुः प्रसीदति ॥२२०॥

यथा सुहृत्सु कर्तव्यं पितृभ्रातृसुतेषु च । तथा करोति पूजां हि समबुद्धिः स उच्यते ॥२२१॥ तिर्यक्पुण्ड्रं न कुर्वीत सम्प्राप्ते मरणेऽपि वा ॥२२२॥ न चान्यनाम विब्रूयात्परान्नारायणादृते । नैवेद्यशेषं देवस्य यो भुनक्ति दिनेदिने ॥२२३॥ सिक्थेसिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् । ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते ॥२२४॥ स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥२२५॥ अशुचिर्वाप्यनाचारो मनसा पापमाचरन् ॥२२६॥ शुचिरेव भवेन्नित्यमूर्ध्वपुण्ड्राङ्कितो नरः । ऊर्ध्वपुण्ड्रविहीनस्य स्मशानसदृशं मुखम् ॥२२७॥ अवलोक्यमुखं तस्य आदित्यमवलोकयेत् । यज्ञो दानं तपश्चैव स्वाध्यायः पितृतर्पणम् ॥२२८॥ व्यर्थं भवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम् । गोपीचन्दनलिप्ताङ्गो यं यं पश्यति चक्षुषा ॥२२९॥ तं तं शुद्धं विजानीयान्नात्र कार्या विचारणा । आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ॥२३०॥ वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति । जीवितं विष्णुभक्तस्य वरं पञ्चदिनान्यपि ॥२३१॥ न तु कल्प सहस्त्रैस्तु भक्तिहीनस्य केशवे । किं तेन जातमात्रेण भूभारेणान्नशत्रुणा ॥२३२॥ यो जातो नार्चयेद्विष्णुं न स्मरेन्नापि कीर्तयेत् । यो ददाति द्विजातिभ्यश्चन्दनं गोपिमर्दितम् ॥२३३॥ अपि सर्षपमात्रेण पुनात्यासप्तमं कुलम् । ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत् ॥२३४॥ अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः । एतादृशोऽपि नाचारं श्रौतं

स्मार्तं परित्यजेत् ॥२३५॥ 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'। 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ॥२३६॥ एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे'। 'आचारश्चैव साधूनामात्मनस्तुष्टिरेव च' ॥२३७॥ 'वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः'। 'निष्कामं ज्ञानपूर्वं तु निवृत्तमिह चोच्यते ॥२३८॥ निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥२३९॥

श्रीमदानन्दतीर्थार्यसहस्रप्रकरणोत्थिता ।
गोततिः सततं सेव्या गीर्वाणैः सिद्धिदा भवेत् ॥२४०॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट्तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः
मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥२४१॥

यः सर्वगुणसम्पूर्णः सर्वदोषविवर्जितः प्रीयतां
प्रीत एवालं विष्णुर्मे परमः सुहृत् ॥२४२॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितः**
**कृष्णामृतमहार्णवः सम्पूर्णः ॥**
**॥ श्रीकृष्णार्पणमस्तु ॥**

॥ श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# यमकभारतम्

॥ॐ॥ ध्यायेत्तं परमानन्दं यन्माता पतिमयदपरमानन्दम् ।
उज्झितपरमानं दम्पत्याद्याद्याश्रमैः सदैव परमानन्दम् ॥१॥
यस्य करालोऽलं चक्रं कालः परस्य हि करालोलम् ।
यस्य गदा पवमानः सन्यो व्यासोऽभवत्सदापवमानः ॥२॥
यस्य रमा न मनोगं जगृहे विश्वम्भरापि नमनोऽगम् ।
यस्य पुमानानन्दं भुङ्क्ते यद्धाम कपतिमानानन्दम् ॥३॥
परमेषु यदातेजः परमेषु चकार वासुदेवो जः ।
मानधि बिभ्रत्सु मनो माऽनधिमाऽसीन्न वासुदेवोऽजः ॥४॥
सोऽजनि देवक्यन्ते यस्मादनुकम्पनाऽव देवक्यन्ते ।
अवदन्देव क्यं ते भुवनं हि सुराः सदैव देवक्यन्ते ॥५॥
नीतो वसुदेवेन स्वततेन स गोकुलं सुवसुदेवेन ।
तत्र यशोदा तनयं मेने कृष्णं स्वकीयमवदातनयम् ॥६॥
ववृधे गोकुलमध्या द्योदेवो विश्वमद्भुताकुलमध्यात् ।
तत्र च पूतनिकाया वधमकरोद्यन्निजाः सपूतनिकायाः ॥७॥
अधुनोच्छकटं लोली पादाङ्गुष्ठेन वातपेशशकटं लोली ।
अतनोद्रक्षामस्य स्वाज्ञानाद्गोपिका सदेरक्षामस्य ॥८॥

मुखलालनलोला तन्मुखगं जगदचष्ट सालनलोलातत् ।
नाध्यैन्मायामस्य जगत्प्रभोः स्वाधिकततमायामस्य ॥९॥
तस्य सुशर्माण्यकरो दरिणो गर्गः सदुक्तिकर्माण्यकरोत् ।
अवदन्नामानमयं जगदादिं वासुदेवनामानमयम् ॥१०॥
तस्य सखा बलनामा ज्येष्ठो भ्राताऽथ यन्निजा बलना मा ।
यस्य च पर्यङ्कोऽयं पूर्वतनो विष्णुमजसपर्यङ्कोऽयम् ॥११॥
तेन हतो वातरयस्तृणचक्रो नाम दितिसतोऽवातरयः ।
हरमाणो बालतमं स्वात्मानं कण्ठरोधिनाऽबालतमम् ॥१२॥
सोऽवनिमध्ये रङ्गन्नरिदरयुग्बालरूपमध्ये रङ्गन् ।
अमुषन्नवनीतमदः स्व गोकुलो गोपिकासुनवनीतमदः ॥१३॥
तन्माता कोपमिता तमनुससारात्मवादवाकोपमिता ।
जगृहे सानमनं तं देवं तच्चिन्तयैव सानमनन्तम् ॥१४॥
अथ सान्तरितामानं विष्णुं विश्वोद्भवं सदान्तरितामानम् ।
अनयद्दामोदरतां योऽरमयत्सुन्दरीं निजामोदरताम् ॥१५॥
चक्रे सोऽर्जुननाशं प्राप्नोति यत्स्मृतिः सदार्जुनना शम् ।
तौ च गतौ निजमोकस्तेनैव नुतेन यन्निजानिजमोकः ॥१६॥
अथ वृन्दावनवासं गोपाश्चक्रुर्जगत्क्षिताऽवनवासम् ।
तत्र बकासुरमारः शौरिरभून्नित्यसंश्रितासुरमारः ॥१७॥
अहनद्वत्सतनूकं योऽपाल्लोकं स्वयत्नत्सतनूकम् ।
सोऽपाद्वत्सानमरः सहाग्रजो गोपवत्सवत्सानमरः ॥१८॥
स विभुः श्रीमानहिके ननर्त यस्य श्रमानमा मा न हि के ।
अकरोन्नद्युदकान्तं कान्तं नीत्वोरगं स नाद्युदकान्तम् ॥१९॥
हत्वा धेनुकमूढं बलात्प्रलम्बं च खेट्र सधेनुकमूढम् ।
व्रजमावीदमृताशः पीत्वा वह्निं चरस्थिरादमृताशः ॥२०॥
गिरिणा रक्षापि कृता व्रजस्य तेन स्वरक्षरक्षापिकृता ।

शक्राय व्यञ्जयता स्वां शक्तिं विश्वमात्मनाऽव्यं व्यञ्जयता ॥२१॥
रेमे गोपीष्वरिहा स मन्मथाक्रान्तसुन्दरीपीष्वरिहा ।
पूर्णानन्दैकतनुः स विश्वरुक्पावनोऽप्यानन्दैकतनुः ॥२२॥
अथ हतयोर्गलिकेश्योः श्वफल्कजप्रापितः पुरीं गलिकेश्योः ।
भङ्क्त्वा धनुराजवरं जघान तेनैव च स्वयं राजवरम् ॥२३॥
मृद्नन्गजमुग्रबलं सबलो रङ्गं विवेश सृतिमुग्रबलम् ।
हत्वा मल्लौ बलिनौ कंसं च विमोक्षितौ ततौ रौ बलिनौ ॥२४॥
प्रादात्सान्दीपनये मृतपुत्रं ज्ञानदीपसान्दीपनये ।
गुर्वर्थेऽज्ञानतमःप्रभेदिता नित्यसम्भृताज्ञानतमः ॥२५॥
जित्वा मागधराजं तोषितमकरोत्सदात्मयोगधराजम् ।
अनुकुर्वन्निजसदनं चक्रे रम्यं पुरं सुबोधनिजसदनम् ॥२६॥
प्रसभं सगजबलस्य क्षत्रस्योच्चैः समगधराजबलस्य ।
मानं शिशुपालवरं हत्वा भैष्मीमवाप शिशुपालवरम् ॥२७॥
हंसो डिभिकश्चपलावमुना संसूदितौ यवनकश्चपला ।
कीर्तिर्विमला विरता प्रतता विश्वाधिपावनीलाविरता ॥२८॥
सत्या जाम्बवतीर्या भार्या विन्दाद्या भानुसाम्बवतीर्याः ।
प्रद्युम्नं मोदनरतः प्राप ज्येष्ठं हरिः सुतं (स्व)मोदरतः ॥२९॥
यत्परिवारतयेशा जाता देवा नृपात्मनाऽरतयेशाः ।
यद्धरितं विषसर्पप्रभृति ध्वान्तं न मारुतिं विषसर्प ॥३०॥
येन हिडिम्बबकाद्या रक्षोधीशा निपातिता बकाद्याः ।
भीमे प्रीतिममेयां व्यञ्जयता तेनैव शेषपाति ममेयाम् ॥३१॥
अथ कृष्णावरणेतान्प्राप्तान्राज्ञोऽश्रृणोत्सदावरणेतान् ।
द्रष्टुं यातः सबलस्तां चानैषीत्पृथासुतांस्ततः सबलः ॥३२॥
तानिन्द्रस्थलवासांश्चक्रे कृष्णः परो निजस्थलवासान् ।
स्वबलोद्रेचितमानैर्जुगोप धर्मं च तैः पराचितमानैः ॥३३॥

वालिवधानुनयाय प्रणयी सख्यं सुसन्दधे नु नयाय ।
वासवजेन विशेषात्तेनैव पुनर्नृजन्मजेन विशेषात् ॥३४॥
मातुः परिभवहान्यै राज्ञा द्युसदामितश्च परिभवहान्यै ।
अभवन्नरकमुरारिर्योऽवात्सीदत्समस्तनरकमुरारिः ॥३५॥
नीतो दिवि देववरै रेमे सत्यासमन्वितोऽदेववरैः ।
सर्वर्तुवने शशिना निशि सत्यां वासरे वनेऽशशिना ॥३६॥
सुरतरुमापालिमतात् प्रकाशयञ्च्छक्तिमात्मनः पाळिमतात् ।
सुरवरवीरेषु दरी प्रधानजीवेश्वरः परेषुदरी ॥३७॥
पुरमभियायारिदरी दत्वा भद्रां पृथासुतायारिदरी ।
शक्रपुरीमभियातः प्रादाद्वह्नेर्वनं सतामभियाऽतः ॥३८॥
शिवभक्तप्रवराद्यं पुमान्न सेहे गिरि(री)शविप्रवराद्यम् ।
तं स्वात्मेन्द्रवरेण व्यधनोद्भीमेन धृतरुद्रवरेण ॥३९॥
यस्याज्ञाबलसारैः पार्थैर्दिग्भ्योहृतं धनं बलसारैः ।
जित्वा क्ष्मामविशेषां प्रसह्य भूपान्समस्तकाम विशेषाम् ॥४०॥
अथ पार्थान् क्रतुराजं प्रापयदमरेट् सरुद्रशक्रतुराजम् ।
पूजा तेनावापि छिन्नश्चैद्यः सृतिं गतेनावापि ॥४१॥
निहतौ सौभकरूशौ शीतो भातश्च येन तौ भकरुशौ ।
अजयद्रुद्रं च रणे बाणार्थेऽवनतिपतितकचन्द्रं चरणे ॥४२॥
असृजज्ज्वरमुग्रतमःक्षयप्रदो लीलयाऽधिवरमुग्रतमः ।
क्रीडामात्रं विश्वं प्रकाशयन्नात्मनः सविहरकमात्रं विश्वम् ॥४३॥
यस्यावेशोरुबलान् न्यहनत् पार्थोऽसुरान्प्रजेशोरुबलान् ।
वरदानादस्यैव जगत्प्रभोरीरणात्समनुगतनादस्यैव ॥४४॥
यस्यावेशात्सबलः प्रचकर्ष पुरं प्रसह्य चेशात्सबलः ।
कुरुपतिनाम नु यमुनाऽऽकृष्टा येनाहुरर्ह्यमतनु यमुना ॥४५॥
यद्बलवान्क्रोधवशान्निनाय नाशं वृकोदरः क्रोधवशान् ।
लेभेऽचान्यागम्यं स्थानं पुष्पाणि धाम चान्यागम्यम् ॥४६॥

यद्बलभारववहत्वान्नाचलदुरगादिभिः सुभारवहत्वात् ।
धर्मादरिहाऽपि पदं भीमो येनैव साहसं रिहाऽपि पदम् ॥४७॥
क्षात्रं धर्मं स्ववता गुरुवृत्त्यै केशवाज्ञया च चरमं स्ववता ।
सर्वं सेहे मनसा भीमनेशैकमानिना हेमनसा ॥४९॥
यद्भक्तप्रवरेण प्रोतः स्वस्मिन्स कीचकः प्रवरेण ।
पतितास्तस्य सहायाः कृष्णार्थे मानिनः समस्य सहायाः ॥५०॥
यद्भक्त्याऽनुगृहीतौ पार्थो भीमश्च गोनृपौ नु गृहीतौ ।
ऋणमुक्त्यै सुव्यत्यस्त्यै क्रमशो वीरावमुञ्चतां सुव्यत्यस्त्यै ॥५१॥
यद्भक्त्याऽमितयाऽलं कृष्णा कार्ये विवेश कृष्णाकार्ये ।
यामीरार्धतनुत्वान्नापाद्भीमादृतेऽपि नापाद्भीमात् ॥५२॥
यां स्प्रष्टुमिच्छन्तमजातशत्रुं न्यवारयत्स्वस्थमजातशत्रुम् ।
शंरूपाने नित्यरतेरियं श्रीरिति स्म देवेड्यदितेरियं श्रीः ॥५३॥
मनसामनसाऽमनसा मनसा यमनन्तमजस्रमवेदनुया ।
विलयं विलयं विलयं विलयन्निखिलं त्वशुभं प्रचकार च यः ॥५४॥
सोऽगाद्दूतमुखेन प्रभुणेदं वर्तते यदूतमुखेन ।
पार्थार्थे बहुतनुतां यत्र प्रकाशयत्स्वयं सबहुतनुताम् ॥५५॥
गुरुकर्णनदीजादीनवधीच्चक्षुर्बलेन जनदीजादीन् ।
शक्त्या निजया परवान्स्वजनानुद्रेचयन्ननन्तयाऽपरवान् ॥५६॥
यस्य सुनीतिसहायान्न रिपून् मेनेऽर्जुनः समेतसहायान् ।
अकरोच्चासु परासुप्रततिं सेनासु धावनासुपरासु ॥५७॥
येन जयद्रथमारः पार्थः शत्रूनवापतद्रथमारः ।
यद्विरहादपि देहे सरथः शश्वत्स्थितेः सदादपि देहे ॥५८॥
यद्भरितो भरताभः प्रभुरं भाभावितोऽभिभरताभः ।
भीमो रभसाभिभवी प्रसभं भाभाभिभूर्भासा भिभवी ॥५९॥
यदनुग्रहिपूर्णत्वाद्भीमः सर्वानरीननहिपूर्णत्वात् ।

अदहद्बाहुबलेन क्रोधाग्रावाहितान्निजाहुबलेन ॥६०॥
कृष्णाभीमाप्ततमः शीर्णं येन स्वकीयहृदयमाप्ततमः ।
धृतराष्ट्रसुतानवधीद्भीमेन स्थापितो मनसि सुसुतानवधीत् ॥६१॥
भीमविपाटितदेहानदर्शयत्स्वानरीन्विपाटितदेहान् ।
कृष्णाया हितकारी सम्यगीरप्रियः सदाऽहितकारी ॥६२॥
अथ हरिणाऽपीतबलं द्रौणेरस्त्रं महारिणा पीतबलम् ।
दधता वसोऽमरणं नीतं चक्रेऽभिमन्युजं सोमरणम् ॥६३॥
तस्य च रक्षा सुकृता जनार्दनेनेशशेषकेक्षासुकृता ।
पार्थेषु प्रेमवता नित्यं भर्त्राऽसुतासुविप्रेमवता ॥६४॥
ज्ञानं परमं प्रादाद्भीष्मगतः सृतिविमोक्षचरमं प्रादात् ।
पाण्डुसुतानामधिकं चक्रे वेदं गुणोत्तरं स्वनामधिकम् ॥६५॥
तेनावापि सुजातैर्हयमेधस्तुरगवर्तनेऽपि सुजातैः ।
पाण्डुसुतैः सवसूकैः प्राप्तैर्व्यासात्मना सुसवसूकैः ॥६६॥
तदनु सुपाण्डुतनूजै रेमे क्ष्मां पालयन् सुपाण्डुतनूजैः ।
अनुपमसखरूपोजः परमः श्रीवल्लभः सति खरूपोऽजः ॥६७॥
सुगतिं चरमामददान्निजयोग्यां ज्ञानिसुततिं परमामददात् ।
पार्थानां सयदूनां स पितृप्रेष्यादिनामिनां सयदीनाम् ॥६८॥
रेमे तत्रापि सुखी परमोऽनन्तो ननन्द तत्रापि सुखी ।
प्राणेनोन्दिरया च प्रयुतो नित्यं महागुणेन्दिरया च ॥६९॥
एवं सर्वाणि हरे रूपाणि श्रीपतेः सुपर्वाणिहरेः ।
पूर्णसुखानि सुभान्ति प्रततानि निरन्तराणि सुभान्ति ॥७०॥
राम राम महाबाहो माया ते सुदुरासदा ।
वाद सादद को लोके पादावेव तवासजेत् ॥७१॥
जेत्सवातव वेदापाके लोकोदद सादव ।
दासरादुसुतेयामाहोबाहा मम राम राः ॥७२॥

देवानां पतयो नित्यं मतं यस्य न जानते ।
तस्मै देव नमस्येऽहं भवतेऽसुरमारये ॥७३॥
समस्तदेवजनकवासुदेवपरामृत ।
वासुदेव परामृतज्ञानमूर्ते नमोऽस्तु ते ॥७४॥
देवादे देवलोकप पूर्णानन्दमहोदधे ।
सर्वज्ञेश रमानाथ देवादेऽदेऽव लोकप ॥७५॥
यो निर्ममेऽशेषपुराणविद्यां योनिर्ममे शेषपुराणविद्याम् ।
योऽनिर्ममेऽशेषपुराणविद्यां यो निर्ममेशे षपुराणविद्याम् ॥७६॥
अनन्तपारामितविक्रमेश प्रभो रमापारमनन्तपार ।
महागुणाढ्यापरिमेयसत्व रमालयाशेषमहागुणाढ्य ॥७७॥
भाभाभाभाभाभा भाभाभाभाभाभा ।
भाभाभाभाभाभा भाभाभाभाभाभा ॥७८॥
नैव परः केशवतः परमादस्मात्समश्च सुकेशवतः ।
योऽयं शपथवरो नः शश्वत्सन्धारितः सुशपथवरोऽनः ॥७९॥
कृष्णकथेयं यमिता सुखतीर्थेनोदिताऽनेनेयं यमिता ।
भक्तिमता परमेशे सर्वोद्रेकात्सदा नुताऽऽप रमेशे ॥८०॥
इति नारायणनामा सुखतीर्थसुपूजितः सुनारायणना मा ।
पूर्ण गुणैरधिक पूर्णज्ञानेच्छाभक्तिभिः स्वधिकपूर्ण(ः) ॥८१॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**यमकभारतं सम्पूर्णम् ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



॥श्रीः॥

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितो

# यतिप्रणवकल्पः

॥ॐ॥ समिच्चर्वाज्यकान् हुत्वा सम्यक्पुरुषसूक्ततः ।
सर्वेषामभयं दत्वा विरक्तः प्रव्रजेद्धरिम् ॥ १॥
श्रुत्वा भागवतं शुद्धमाचार्यं शरणं व्रजेत् ।
अधीहि भगवो ब्रह्मेत्यस्मै ब्रूयाद्गुरुः परम् ॥२॥
उच्चारयेत्त्रिशस्तारं दक्षिणे श्रवणे तथा ।
ऋषिच्छन्दोदैवतानि ब्रूयात्तस्य क्रमात्सुधीः ॥३॥
अन्तर्यामीति गायत्री परमात्मेत्यनुक्रमात् ।
विश्वश्च तैजसः प्राज्ञस्तुर्यश्चाक्षरदेवताः ॥४॥
कृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च ।
परं ज्योतिः परं ब्रह्म वासुदेव इति क्रमात् ॥५॥
अकारादेस्तथा शान्तातिशान्तान्तस्य देवताः ।
एवमुक्त्वा तु तद्ध्यानं ब्रूयाद्भक्ताय सद्गुरुः ॥६॥
अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येन्दुवह्निगम् ।
पीठं तत्पद्ममध्यस्थं नारायणमनामयम् ॥ ७ ॥
उद्यदादित्यसङ्काशं तेजसाऽनुपमं सदा ।
सहस्रेणापि सूर्याणां सज्ज्ञानानन्दरूपिणम् ॥८॥

अतिरक्ततलं भास्वन्नखव्रातविभूषितम् ।
वृत्तजङ्घं वृत्तजानुं हस्तिहस्तोरुमीश्वरम् ॥९॥
महाकटितटाबद्धकाञ्चीपीताम्बरोज्ज्वलम् ।
सुनिम्ननाभिं त्रिवलिं सुवृत्तोदरबन्धनम् ॥१०॥
विशालवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
वनमालाधरं हारवैजयंत्यादिभिर्युतम् ॥११॥
पृथुदीर्घचतुर्बाहुं चक्रशङ्खगदाम्बुजैः ।
युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुण्डलम् ॥१२॥
पूर्णचन्द्रायुतोद्रिक्तकान्तिमन्मुखपङ्कजम् ।
सुभ्रुवं सुललाटान्तं किरीटाबद्धमूर्धजम् ॥१३॥
निःशेषदुःखदमनं नित्यानन्दं शुचिस्मितम् ।
विश्वादींश्चैव कृष्णादीनेवं भूतान् सनातनान् ॥१४॥
अभिन्नानेव सततं तस्माद्विष्णोः परात्मनः ।
वराभयोद्यतकरान्नित्यानन्दैकरूपिणः ॥१५॥
एवमुक्त्वा गुरुर्ध्यानं शपथं कारयेत्ततः ।
न विष्णुं वैष्णवांश्चैव विसृजेयमिति त्रिशः ॥१६॥
न चान्यदेवतासाम्यं तदैक्यमथवा हरेः ।
चिन्तयेयं मृतो वापि न चाप्येकत्ववादिभिः ॥१७॥
समत्ववादिभिर्वाऽहं सङ्गच्छेयं कदाचन ।
तन्निन्दकैश्च तद्भक्तनिन्दकैर्वा महामुने ॥१८॥
एवं कृते तु शपथे मस्तके हस्तपङ्कजम् ।
निधायोत्तीर्य संसारात्सुखी भव हरेः प्रियः ॥१९॥
सर्वदुःखादिभिर्मुक्तो नित्यानन्दैकरूपकः ।
सम्प्राप्य विष्णुसामीप्यं तत्रापि हरिभक्तिमान् ॥२०॥
भक्तिमांश्चान्यदेवेषु तारतम्यं च संस्मरन् ।

सर्वोत्कर्षं स्मरन्विष्णोर्भूयाश्चैव सदा सुखी ॥२१॥
न मुक्तौ विष्णुनैक्यं वा मुक्तानां साम्यमेव वा ।
स्मरेथा इति चोक्त्वाथ समयाननुशिक्षयेत् ॥२२॥
नित्यशश्च हरेः पूजा जपध्यानसमर्पणम् ।
कर्तव्यं तु त्वया वत्स जपश्च त्रिसहस्रकः ॥२३॥
मध्यमः प्रणवस्योक्तो योऽवरः स सहस्रकः ।
त्रिसहस्रात्परो यस्तु स उत्तमजपः स्मृतः ॥२४॥
आत्मानं प्रतिबिम्बत्वे ध्यायन् बिम्बं जनार्दनम् ।
ध्यायस्व सततं वत्स सपर्यां नित्यशः कुरु ॥२५॥
मानसैर्वाथ पुष्पैर्वा प्रणवेन समाहितः ।
अन्यांश्च वैष्णवान्मन्त्राञ्जपेथा भक्तिपूर्वकम् ॥२६॥
श्रृणुष्व वैष्णवं शास्त्रं सदा वेदार्थतत्परः ।
वेदान्मन्त्रानुपनिषत्सहितान्सर्वदा श्रृणु ॥२७॥
इतिहासपुराणं च पञ्चरात्रं तथैव च ।
तदर्थान् ब्रह्मसूत्रैश्च सम्यङ्निर्णीय तत्त्वतः ॥२८॥
विष्णोः सर्वोत्तमत्वं च सर्वदा प्रतिपादय ॥छ॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितो**
**यतिप्रणवकल्पः सम्पूर्णः ॥**

**॥ श्रीकृष्णार्पणमस्तु ॥**



|| श्रीः ||

|| श्रीहनुमदुपासितचरण रघुकुलतिलक सीतापति श्रीरामचन्द्राय नमः ||

*

|| श्रीद्रौपदीप्रिय श्रीभीमसेनाराध्य श्रीयादवकृष्णस्वरूपिणे नमः ||

*

|| श्रीमदानन्दतीर्थाचार्यहृत्कमलमध्यनिवासि श्रीवेदव्यासाय नमः ||

*

|| सकलगुणपरिपूर्ण सर्वदोषदूर ज्ञानगम्य मोक्षप्रदात्रे श्रीहरये नमः ||

|| श्रीकृष्णार्पणमस्तु ||

|| श्रीमध्वेशार्पणमस्तु ||

**